अङ्गिरो वचने पतितपदस्य सर्व्वधर्म्मवहिष्कृतवाचिनः प्रायश्चित्तगौरवेण चाण्डालजातिसाहचर्य्येण च यवनादिम्लेच्छजातिवाचित्वं न तु ब्रह्महत्यादिपतितवाचित्वं तत्र सकृदुच्छिष्टाशने स्वल्पप्रायश्चित्तत्वात्। अतएव ब्रह्महत्यादि उच्छिष्टाशने स्नानाभ्यासत्र्यहादिवसाम्यं प्रायश्चित्तविवेककृद्भिः संसर्गिप्रकरणे उक्तम्। अत्र तु स्नानेन द्वादशवारास्तथेति यवनादीनान्तु सर्व्वधर्म्मराहित्यमुक्तम् हरिवंशे। "सगरस्तां प्रतिज्ञाञ्च गुरोर्वाक्यं निशम्य च। धर्म्मं जघान तेषां वै वेशान्यत्वं चकार ह। अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्ज्जयत्। यवनानां शिरः सर्व्वं काम्बोजानान्तथैव च। पारदा मुक्तकेशाश्च पह्लवाः श्मश्रुधारिणः। निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना। शका यवनकाम्बोजाः पारदाः पह्लवास्तथा। कोलिसर्पाः समहिषा दर्व्वाश्चोलाः सकेरलाः। वशिष्ठवचनाद्राजन् सगरेण महात्मना"। शकानां शकदेशोद्भवानां क्षत्रियाणाम् एवं यवनादीनामिति। अत्र यवनशब्दस्तद्देशोद्भववाची चवर्गतृतीयादिः। यवनो देशभेदे गौरिति त्रिकाण्डशेषाभिदर्शनात्। तेषां म्लेच्छत्वमप्युक्तं विष्णुपुराणे। तथा कृतान् यवनादीनुपक्रम्य ते चात्मधर्म्मपरित्यागात् म्लेच्छत्वं ययुरिति। बौधायनः। "गोमांसखादको यश्च विरुद्धं बहु भाषते। सर्व्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते"। अतएव चाण्डालेन सह म्लेच्छानां साम्यमाह देवलः। "दासीकृतो बलात् म्लेच्छैश्चाण्डालाद्यैश्च दस्युभिः। अशुभं कारितः कर्म्म गवादेः प्राणहिंसनम्। उच्छिष्टमार्ज्जनञ्चैव तथा तस्यैव भक्षणम्। खरोष्ट्रविड्वराहाणामामिषस्य च भक्षणम्। तत् स्त्रीणाञ्च तथा सङ्ग्रस्ताभिश्च सह भोजनम्। मासोषिते द्विजातौ च प्राजापत्यं विशोधनम्। चान्द्रायणन्त्वाहिताग्नेः

पराकस्त्वथ वा भवेत् ॥ चान्द्रायणं पराकं वा चरेत् संवत्सरोषितः । संवत्सरोषितः शूद्रो मासार्द्धं यावकं पिबेत् ॥ मासं विप्रोषितः शूद्रः कृच्छ्रपादेन शुध्यति" ॥ विप्रोषितो विशेषेण प्रकर्षेण उषितः । "ऊर्द्धं संवत्सरात् कल्प्यं प्रायश्चित्तं द्विजोत्तमैः । संवत्सरैश्चतुर्भिश्च तद्भावं सोऽधिगच्छति । ज्ञानं न विद्यते तस्य प्रायश्चित्तैर्दुरात्मनः" ॥ तदिह म्लेच्छचाण्डालाद्यैर्दस्युभिर्यदा नाहिताग्निर्द्विजातिरुच्छिष्टमार्जनोच्छिष्टभक्षणखरोष्ट्रविड्वराहमांसभक्षणम्लेच्छस्त्रीसंसर्गतदीयस्त्रीसहभोजनादिकुत्सितं कर्म बलात् मासैकं कारितः तदा तेन प्राजापत्यम् । साग्निना तु चान्द्रायणं कार्य्यं क्षत्रियवैश्याभ्यां पराकव्रतम् अनग्निना ब्राह्मणेन तु संवत्सरैकदाप्यकरणे चान्द्रायणं कार्य्यम् इतराभ्यां पराकः । शूद्रेण तु मासैककरणे कृच्छ्रपादं संवत्सरैकदाप्यकरणे मासार्द्धं यावकपानम् । संवत्सरादूर्द्धं वत्सरचतुष्टयं यावत् भागद्वारेण प्रायश्चित्तमूहनीयम् । तदूर्द्धं तत्सत्त्वेन पतितत्वात् प्रायश्चित्ताभावात् मरणमिति यत् प्रायश्चित्तविवेकोक्तं तत् पापाधिक्यसम्भवेन प्रायश्चित्तलाघवात् अनुपनीताष्टवर्षाभ्यन्तर-बालविषयम् । "चतुर्थाद्वत्सरादूर्द्धमष्टमं यावदेव हि । विप्रोषितं प्रकुर्वन्ति गुरुसम्बन्धिबान्धवाः" ॥ इति ब्रह्मपुराणीयमप्येतत्परमिति । अत्र जातमात्रस्याहिताग्नित्वसम्भवः तथा च जावालः । "जाते कुमारेऽरणिं मथित्वा अग्निमायुष्यहोमान् जुहोति तस्मिंश्चूडाकरणोपनयनव्रतादेशगोदानक्रियास्तस्मिन्नेवैनमुद्वाहयेयुः यथासाग्निरिति" । यत्तु कुमारवचनम् । "जातमात्रः शिशुस्तावत् यावदष्टौ समावयः । स हि गर्भसमो ज्ञेयो व्यक्तिमात्रप्रदर्शकः ॥ भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथानृते । तस्मिन् काले न दोषः स्यात् स यावन्नोपनीयते" ॥ इति तदुत्पत्ति

रिक्राल्पपापहरम्। भ्रष्टवर्षमद्दणम्। अनुपनीतस्यापि पर-स्ताद्दोषार्थम् उपनयनपदश्च पञ्चवर्षाद्युपनीतस्य वर्षकाष्टकेभ्यः प्रागपि दोषप्रापनार्थं प्रायश्चित्तविवेकेऽपि "सुरापाननिषेधो-ऽयं जात्याश्रय इति स्थितिः। न पिबेद् ब्राह्मणो मद्यं निबिड-मपि चापरम्" इति कुमारवचनान्तरदर्शनात् पूर्ववचनं मद्ये-तरपरम् इत्युक्तं तथा च बृहस्पतिः। "स्यात् कामाचार-भक्षोक्तिः महतः पातकाद्दृते"। ततश्च "पतितान्नन्तु यो भुङ्क्ते ससाहमुदके वसेत्। पानीयपानतयापि कुम्भवारि पिबे-त्त्र्यहम्"॥ इत्यङ्गिरो वचनमपि। शूद्रान्नं ब्राह्मणो भुङ्क्ते इति यम्रवचनसमानविषयम्। अतएव ससाहोदकवासोऽपि धेनुद्वयेन सङ्कलितः प्रायश्चित्तविवेककृतेति। एवञ्च तत्तत्-पानीयपानेऽप्यत्तानादौ तत्तद्भोजनप्रायश्चित्तवादो बोध्यः। गायत्र्यादिरहिताऽप्रत्याख्याताऽन्त्यजपुरोहितादिरूपपतित-प्राप्यपापमत्रपर वा अङ्गिरो वचनं तेषां वधेऽत्यन्तलघुप्राय-श्चित्तश्रुत्याऽत्यन्ताल्पप्रायश्चित्तमत्रापि। तथा च कल्पतरौ भविष्यपुराणम्। "यदात्यन्तगुणैर्हीनो गायत्र्या च विवर्जितः। निहतः कामतश्चैव तदा यत् स्यात् निबोध मे॥ हत्वा यदा-समर्थयेत् तचेट परिकल्पयेत्। वसिष्ठेन यदाख्यातं ब्रह्महत्या व्यपोहनम्"॥ द्वादशरात्रमुपवसेदित्यर्थः। यच्च प्रायश्चित्त-विवेककृताप्युक्त "ब्रह्महा वत्सरं लब्ध्वा चरेत् पूर्वं तु वत्सरे। हिरण्यमपि गोहपायतितभूमिसर्पोपि ब्राह्मणेभ्यो दद्यात्" इति सुमन्तूक्त प्रायश्चित्तमुक्तं तत् समर्थपरं भोजनवत्तदभि-गमनरूपसंसर्गेऽप्येवम्।

अथान्त्यजस्त्रीगमनभोजनप्रायश्चित्तम्। तत्र संवर्तः। "नटीं शैलूषिकीञ्चैव रजकीं वेणुजीविनीम्। गत्वा चान्द्रायणं कुर्यात् तथा चर्मोपजीविनीम्। कामतस्तु यदा गच्छेदर-

चान्द्रायणद्वयम्" ॥ ततश्चाज्ञानतश्चान्द्रायणं चान्द्रायणे षेत्व-ष्टकम्। शैलुषिकः "स्त्र्यन्वेषो नटानान्तु स तु शैलूषिकः स्मृतः"। इति ब्रह्मपुराणोक्तम् इति प्रायश्चित्तविवेकः। यत् यमवचनं "रजकश्चर्मकारश्च नटो वरुड एव च। कैवर्त्तमेद-भिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ॥ एतेषान्तु स्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च। पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति" ॥ इति पातित्याभिधायकम्। तत्र रजकादीनां प्रागुक्तमनुवचने शौण्डिकतुल्यत्वात्। शौण्डिके प्रागुक्तयक्ष-वचनेन मासत्रयकपानव्रतविधानात्। तत्र प्राजापत्यद्वय-संकलनात्। बहूनामेकधर्म्माणामिति बौधायनवचनात्। एते-ष्वपि तथाकल्पनात् अज्ञानतः सकृद्भोजने प्राजापत्यद्वयं तत-श्चाज्ञानात् यत् पातित्यमभिहितं तत् अवतिचारभोजने ज्ञेयम्। पातित्याच्च द्वादशवार्षिकप्रायश्चित्तार्हता ज्ञानतस्तु कृतेऽपि द्विगुणप्रायश्चित्तेऽव्यवहार्य्यता अन्यथा तत् संसर्गिणि प्रायश्चित्तव्यवस्था न स्यात्। प्रतिग्रहेऽप्येवम्। अभिगमने तु चतुर्व्विंशतिवार्षिकमनुपातित्यमज्ञानात् ज्ञानात्तु साम्यमिति। चा-ण्डालस्पृष्टोदके त्वङ्गिराः। "यस्तु चाण्डालसंस्पृष्टं पिबेत्तोयमका-मतः। स तु सान्तपनं कृच्छ्रं चरेत् शुद्ध्यर्थमात्मनः" ॥ सान्त-पनमाह याज्ञवल्क्यः। "कुशोदकञ्च गोक्षीरं दधि मूत्रं शकृत् घृतम्। प्राश्यापरेऽह्नुपवसेत् कृच्छ्रं सान्तपनं चरन्" ॥ एत-द्द्वादशाध्यं तदशक्तौ षडुपवासव्रतोयमानात् पुराणो देयः। चाण्डालादि स्पृष्टान्नभक्षणेऽपि प्राजापत्यम्। "अमेध्यपतित-चाण्डालपुक्कशरजस्वलावधूतकुनिकुष्ठि-कुनखिस्पृष्टानि भुक्त्वा कृच्छ्रमाचरेत्" इति शङ्खवचनात् एतत् सकृदज्ञानविषयम्। एष प्रायश्चित्तमधिकृत्य "बालस्याशक्तस्य वा तत्पिताऽनुध्याय मनसा सर्व्वकर्म्माणि कुर्व्वीत पितुरभावे सत्याचार्य्याः" इति

पैठीनसिवचनात् । "रोगी वृद्धस्तु पोगण्डः कुर्वन्त्यन्यैर्व्रतं सदा" इति ब्रह्मपुराणाच्चाशक्तौ प्रायश्चित्तमन्येन कार्यम् अनुध्याय तदीयं पापं मनसा सङ्कल्प्येत्यर्थः ।

तदयं संक्षेपः । चाण्डालाद्यन्नभक्षणोद्यमे कण्ठादर्शनयनसम्भावनारहितेऽर्द्धं प्रायश्चित्तम् । चाण्डालाद्यन्नभक्षणे तप्तकृच्छ्रमज्ञानात्तदशक्तौ पादोनधेनुचतुष्टयम् । सपादैकादश कार्षापणा वा देयाः । चान्द्रायणं ज्ञानात् तदशक्तौ धेन्वष्टकं सार्द्धद्वाविंशति कार्षापणा वा देयाः । पराकौ बलात्कारे तदशक्तौ पञ्च धेनवः । पञ्चदश कार्षापणा वा देयाः । सर्वत्रोच्छिष्टे तु व्रतद्वैगुण्यम् आपद्यज्ञानभुक्तोत्तारिते मासयावकव्रतम् । तदशक्तौ धेनुद्वयं षट् कार्षापणा वा देयाः । तत्रोच्छिष्टान्ने पराक इति । अभ्यासभेदे त्वाहत्तिरूहनीया । शुष्कान्ने सर्वत्रार्द्धं जलाभावयोः सर्वत्र तुरीयांशः अज्ञानतः चाण्डालस्पृष्टोदकपाने द्व्यहसाध्यं सान्तपनं तदशक्तौ कार्षापणैको देयः । अज्ञानतः चाण्डालस्पृष्टान्नभक्षणे प्राजापत्यं तदशक्तौ धेनुरेका कार्षापणत्रयं वा देयम् । एतच्च ब्राह्मणस्य क्षत्रियादीनां तु पादपादहानिः स्त्रीबालवृद्धरोगिणामर्द्धम् ।

अथ गोमांसादिभक्षणप्रायश्चित्तम् । सुमन्तुः । "गोमांसभक्षणे प्राजापत्यं चरेदिति" । इदमज्ञानतः सकृद्भोजनविषयम् एतत् प्रायश्चित्तान्ते पुनरुपनयनमाह विष्णुः । "ग्रामकुक्कुटनरगोमांसभक्षणे च सर्वेष्वेव द्विजातीनां प्रायश्चित्तान्ते पुनः संस्कारं कुर्य्यादिति" प्राजापत्ये धेनुरेका कार्षापणत्रयं वा देयम् ।। चाण्डालान्नभक्षणप्रकरणे उपनयनं चान्द्रायणसममिति शूलपाणि महामहोपाध्यायसङ्गवनात् संस्काराशक्तौ धेन्वष्टकं सार्द्धद्वाविंशतिकार्षापणा वा देयाः । यद्यः । "ग्रामान्नं कुञ्जरोष्ट्रौ च सर्वं पञ्चनखस्तथा । क्रव्यादं कुक्कुटं ग्राम्यं

कुर्य्यात् संवत्सरं व्रतम्" ॥ तयेति भुक्तेत्यर्थः। एतच्च चिर-कालाभ्यासे संवत्सरव्रते पञ्चदश धेनवः। पञ्चचत्वारिंशत् कार्षापणा वा देयाः। अभ्यासे तु प्राजापत्यमावृत्तिः। तत्तुल्यव्रतान्तरं वा। संस्कारस्तु सकृदेव। हारीतः। "मत्स्य-कण्टकशम्बूकशङ्खशुक्तिकपर्दकान्। पीत्वा नवोदकञ्चैव पञ्च-गव्येन शुद्ध्यति" ॥ नवोदकं नवखातजलं वर्षोदकञ्च। तथा च ब्रह्मपुराणम्। "नवखातजलं गावो महिष्यश्छागयोनयः। शुद्ध्यन्ति दिवसैरेव दशभिर्नात्र संशयः" ॥ मिताक्षरायां स्मृतिः। "काले नवोदकं शुद्धं न पातव्यन्तु तत् त्र्यहम्। अकाले तु दशाहं स्यात् पीत्वा नाद्यादहर्निशम्" ॥ काले वर्षाकाले। शङ्खः। "स्नानमाचमनं दानं देवता पितृतर्प-णम्। शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः" ॥ पाना-दीतरस्पर्शादौ च हरिवंशः। "अभीममम्भो विसृजन्ति मेघाः पूतं पवित्रं पवनैः सुगन्धिः" जावालः। "केशकीटावपन्नञ्च स्त्रीभिः स्पृष्टं तथैव च। क्षोदयुक्तं शूद्रसंस्पृष्टं पञ्चगव्येन शुद्ध्यति" ॥ भुक्त्वेति शेषः। अवपन्नं केशादिभिः सह पक्वम्। स्त्री शूद्रा पञ्चगव्येन तन्मात्रपानेन व्रतरूपत्वात् तेन तत् पीत्वोपवसेत्। तदशक्तौ षष्टो पणा देयाः।

अथ भार्य्यायां मातृत्वादि वदतः प्रायश्चित्तम्। यथा स्मृतिसागरे यमः। "क्रोधान्मोहाद्वदन् भार्य्यां मातरं भगि-नीमपि। प्राजापत्यव्रतं कुर्य्यात् सर्ववर्णेष्वयं विधिः" ॥ त्यागानन्तरसङ्गहे मत्स्यतन्त्रं "क्रोधाद् यदि त्यजेद्भार्य्यां वयः-स्थाञ्च गुणाधिकाम्। ऋषिचान्द्रायणं कृत्वा पुनः संग्रह-मादिशेत्" ॥ ऋषिचान्द्रायणमाह यमः। "त्रीं स्त्रीन् पिण्डान् समश्नीयान्नियतात्मा दृढव्रतः। हविष्यान्नस्य वै मासं ऋषिचान्द्रायणं स्मृतम्" ॥ ऋषिचान्द्रायणे पादोनधेनु-

चतुष्टयम् । याज्ञवल्क्येनाप्यत्र दण्डविधानात् । प्रायश्चित्तं सूचितम् । यथा "अयुक्तं शपथं कुर्वन्नयोग्योयोग्यकर्मकृत् । वृषक्षुद्रपशूनाञ्च पुंस्त्वस्य प्रतिरोधकृत् ॥ साधारणस्यापलापी दासीगर्भविनाशकृत् । पितृपुत्रसुहृद्भ्रातृदम्पत्याचार्य्यशिष्यकाः॥ एषामपतितानान्तु त्यागी च शतदण्डभाक्"॥ अयुक्तं शपथं कुर्वन्निति स्वभार्य्यां प्रति यदि त्वां गच्छामि तदा मातरमेव गच्छामीत्ययुक्तशपथकर्त्तेति शूलपाणिमहामहोपाध्यायाः ।

अथोपवीतच्छेदनप्रायश्चित्तं कामरूपीयनिबन्धे स्मृतिसागरे आपस्तम्बः । "ब्राह्मणेन यदा दैवाच्छिन्नं यज्ञोपवीतकम् । मनस्तापेन शुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः ॥ प्राणायामत्रयं कृत्वा निराहारः क्षिपेद्दिनम्" ॥ वृद्धमनुः । "उपवीतं ब्राह्मणस्य छिन्नं शूद्रेण कामतः । अन्यदादाय मन्त्रेण जपन्नुपवसेद्दिनम्" ॥ अनादेशे गायत्रीमिति वचनात् । अनिर्दिष्टे शतमिति वचनाच्छताष्टसिगायत्रीजपं कृत्वा उपवसेत् कश्यपश्च । "चाण्डालैः श्वपचैर्वापि छिन्नं यज्ञोपवीतकम् । मुनिभिस्तु विनिर्दिष्टं महासान्तपनद्वयम्" ॥ महासान्तपनमाह याज्ञवल्क्यः । "कुशोदकञ्च गोक्षीरं दधि मूत्रं शकृद्घृतम् । प्राश्याऽपरेऽह्न्युपवसेत् कृच्छ्रं सान्तपनं चरन् ॥ पृथक् सान्तपनद्रव्यैः षडहः सोपवासकः । सप्ताहेनैव कृच्छ्रोऽयं महासान्तपनः स्मृतः" ॥ सप्ताहसाध्यमहासान्तपनो धेनुद्वयसमान इति प्रायश्चित्तविवेकः । बृहस्पतिः । "शूद्रेण तु यदा छिन्नमुपवीतं द्विजन्मनः । दण्डं त्रिंशत् पणं दत्त्वा प्राजापत्येन शुद्ध्यति" ॥ प्राजापत्यं धेनुदानसमं तत्तुल्यकार्षापणत्रयम् । हारीतः । "चाण्डालपुक्कश म्लेच्छान्त्यजकापालिकैस्तथा । छिन्नयज्ञोपवीतो यः सोऽतिकृच्छ्रेण शुद्ध्यति" ॥ अतिकृच्छ्रे द्वे धेनू ।

अथ रेतो मूत्रपुरीषभक्षणप्रायश्चित्तम्। बृहस्पतिः। "अलेह्यानामपेयानामभक्ष्याणाञ्च भक्षणे। रेतोमूत्रपुरीषाणां शुद्धेर् चान्द्रायणञ्चरेत्"॥ गौतमः। "अमत्या पाने पयो घृतमुदकं वायुं प्रति त्र्यहं पिबेत् सतप्तकृच्छ्रः। ततः संस्कारः मूत्रपुरीषरेतसां प्राशने चैवमिति"॥ वायुं तप्तदुग्धवाष्पम् अयं द्वादशाहसाध्यस्तप्तकृच्छ्रः। चान्द्रायणतप्तकृच्छ्रयोर्ज्ञानाज्ञानाभ्यां व्यवस्था संस्कारस्तूभयत्रैव। चान्द्रायणे धेन्वष्टकं तप्तकृच्छ्रे धेनुचतुष्टयम्। उपनयनं चान्द्रायणसमम्। प्रायश्चित्तविवेककृतापि चाण्डालान्नभक्षणप्रायश्चित्ते तथा संकलनात्। उपनयने विशेषयति मनुः। "वपनं मेखला दण्डो भैक्ष्यचर्य्या व्रतानि च। निवर्त्तन्ते द्विजातीनां पुनः संस्कारकर्म्मणि"॥ स्वाध्यायापेक्षया नास्तीत्याह यमः। "विप्रस्य क्षत्रियस्यापि मौञ्जी स्यादुत्तरायणे। दक्षिणे च विशां कार्य्या नानध्याये न संक्रमे॥ अनध्यायेऽपि कुर्वीत यस्य नैमित्तिकं भवेत्"॥ अविना दक्षिणायनक्षणपक्षयोः समुच्चयः। मलमासादिदोषोऽप्यत्र नास्ति प्रायश्चित्ताङ्गत्वेन प्रतिप्रसूतत्वात्। तथा च दक्षः। "नैमित्तिकानि काम्यानि निपतन्ति यथा यथा। तथा तथैव कार्य्याणि न कालस्तु विधीयते"॥ संवर्त्तः। "विण्मूत्रभक्षणे विप्रः प्राजापत्यं समाचरेत्"॥ एतद्बलात्कारविषय इति प्रायश्चित्तविवेकः। वस्तुतस्तु बलाभावे बलात्कारे आधिक्यं प्राक् प्रतिपादितम्। अत्र ऊनैकादशवर्षीयबालविषयमिदम्। क्षत्रियादौ पादपादहानिः।

अथोच्छिष्टस्य चाण्डालादिस्पर्शप्रायश्चित्तम्। आपस्तम्बः। "भुक्तोच्छिष्टस्त्वनाचान्तश्चाण्डालैः श्वपचेन वा। प्रमादात् स्पर्शनं गच्छेत् तत्र कुर्य्याद्विशोधनम्॥ गायत्र्यष्टसहस्रन्तु द्रुपदां वा शतं जपेत्। त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन

शुद्ध्यति ॥ भुक्तोच्छिष्टोऽन्त्यजैः स्पृष्टः प्राजापत्यं समाचरेत्। अर्द्धोच्छिष्टे स्मृतः पादः पाद आमाशने तथा" ॥ प्राजापत्यं स्नाने अर्द्धोच्छिष्टो येनाद्यग्रासः आस्ये निक्षिप्तः। न तु निगीर्णः। दक्षः। पाने मैथुनसंसर्गे तथा मूत्रपुरीषयोः। संस्पर्शे यदि गच्छेत्तु मद्योदक्यान्त्यजैः सह ॥ दिनमेकं चरेन्मूत्रे पुरीषे तु दिनद्वयम्। दिनत्रयं मैथुने स्यात् पाने स्याच्च चतुष्टयम्" ॥ काश्यपः। "श्वसूकरान्त्य चाण्डालमद्यभाण्ड-रजस्वलाः। यद्युच्छिष्टः स्पृशेत्तत्र कृच्छ्रं सान्तपनं चरेत्" ॥ एतज्ज्ञानाभ्यासे सान्तपने धेनुद्वयम्। ब्रह्मपुराणे। "उच्छिष्टेन तु शूद्रेण विप्रः स्पृष्टन्तु तादृशः। उपवासेन शुद्धिः स्यात् शुना संस्पृष्ट एव वा ॥ उच्छिष्टेन तु विप्रेण विप्रः स्पृष्टस्तु तादृशः। उभौ स्नानं प्रकुर्वीत सद्य एव समाहितौ" ॥ अनुच्छिष्ट ब्राह्मणस्य स्नानमिति प्रायश्चित्तविवेकः।

अथ रजस्वलास्पर्शप्रायश्चित्तम्। काश्यपः। "रजस्वला संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि। एकरात्रं निराहारा पञ्चगव्येन शुद्ध्यति ॥ रजस्वला तु संस्पृष्टा राजन्या ब्राह्मणी तु या। त्रिरात्रेण विशुद्धिः स्यात् व्यासस्य वचनं यथा ॥ रजस्वला तु संस्पृष्टा वैश्यया ब्राह्मणी च या। पञ्चरात्रनिराहारा पञ्चगव्येन शुद्ध्यति ॥ रजस्वला तु संस्पृष्टा शूद्रया ब्राह्मणी यदि। षड्रात्रेण विशुद्धा स्तु ब्राह्मणी कामचारतः। अकामतश्चरेदर्द्धं ब्राह्मणी सर्वजातिषु" ॥ एतेन रजस्वलायाः ब्राह्मण्याः सवर्णरजस्वलास्पर्शे एकरात्रोपवासः पञ्चगव्यपानं कामतः। अकामतस्तदर्द्धं नक्तव्रतं असवर्णरजस्वलास्पर्शे त्रिरात्रपञ्चरात्रषड्रात्रोपवासाः। अकामतस्तदर्द्धम्। एतच्च-तुर्थाह्नानन्तरं कर्त्तव्यम्। "चाण्डालेन श्वपाकेन संस्पृष्टा चेद्रजस्वला। अतिक्रम्य तान्यहानि प्रायश्चित्तं समाचरेत् ॥

त्रिरात्रमुपवासः स्यात् पञ्चगव्येन शुद्ध्यति। तां भिन्नां तु व्यति-
क्रम्य स्वजात्यन्नन्तु कारयेत्" ॥ इति वचनान्तरदर्शनात्
एतत् कामतः। अत्र दिनभेदोऽपि नास्ति। अत्रापि वृद्ध-
स्मृतिः। "पतितान्त्यश्वपाकैस्तु संस्पृष्टा स्त्री रजस्वला। तान्य-
हानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥ प्रथमेऽह्नि त्रिरात्रन्तु
द्वितीये द्व्यहमाचरेत्। अहोरात्रं तृतीयेऽह्नि चतुर्थे नक्त-
माचरेत्" ॥ चतुर्थेऽह्नीति शुचित्वाभावात् पूर्वं व्याख्यः। "रज-
स्वला यदा स्पृष्टा श्वजम्बुकखरैः क्वचित्। निराहारा भवेत्ता-
वत् यावत् स्नानेन शुद्ध्यति" ॥ अत्रापि वृद्धसत्यकदिनभेद-
व्यवस्था। वृद्धशातातपः। "रजस्वले तु येनाथ्याँवन्योऽन्यं
स्पृशतो यदि। सवर्णे पञ्चगव्यन्तु ब्रह्मकूर्चमतः परम्" ॥
पञ्चगव्यपानं व्रतरूपम्। तेनोपवासः। ब्रह्मकूर्चमाह जावाल.।
"अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः। पञ्चगव्यं
पिबेत् प्रातर्ब्रह्मकूर्चविधिः स्मृतः" ॥ तदशक्तौ पुराणैकं दात-
व्यम्। उच्छिष्टशूद्रादिस्पर्शे वृहस्पतिः। "यदा चोच्छिष्टया
शूद्रा संस्पृष्टा द्व्यहमाचरेत्।· अहोरात्रं तृतीयेऽह्नि परतो
नक्तमाचरेत्" ॥ परतश्चतुर्थदिने स्नायात् पूर्वमिति ज्ञेयम्।
इति श्रीरघुनन्दनभट्टाचार्यविरचितप्रायश्चित्ततत्त्वं समाप्तम्।

---

# ज्योतिस्तत्त्वम् ।

नमो गणेशाय ।

प्रणम्य सच्चिदानन्दं भास्करं जगदीश्वरम् ।
ज्योतिःशास्त्रस्य तत्त्वानि वक्ति श्रीरघुनन्दनः ॥

"राश्यादिनिर्णयस्तत्र चन्द्रादेश्च प्रतिक्रिया । प्रकीर्णं सर्वतोभद्रं बालाद्युपयमस्तथा ॥ गर्भाधानं ततः पुंसां सीमन्तो जातभद्रता । जातनामकनिष्क्रामक्रियाप्राशनचूडकाः ॥ कर्णवेधस्तथा विद्यारम्भोपनयनिर्णयः । गृहाद्यं कपिराद्युत्यं यानं छत्रं नृपासनम्" ॥

अथ राश्यादिनिर्णयः । "मेषवृषमिथुनकर्कटसिंहाः कन्यातुलाथ वृश्चिकभम् । धनुरथ मकरः कुम्भो मीन इति च राशयः कथिताः" ॥ राशिकथनम् । "अश्विन्या सह भरणी कृत्तिकापादः कीर्त्तितो मेषः । वृषभः कृत्तिकाशेषं रोहिण्यर्द्धञ्च मृगशिरसः ॥ मृगशिरसोऽर्द्धं चार्द्रा पुनर्वसोस्त्रिपादं मिथुनम् । पादः पुनर्वसोरन्त्यः पुष्योऽश्लेषा च कर्कटः ॥ सिंहोऽथ मघा पूर्वफल्गुनीपाद उत्तराद्याः । तच्छेषं हस्ताचित्रार्द्धं कन्यकाख्यः तौलिनि चित्रार्द्धं स्वातीविशाखायाश्च पादत्रयं अलिनि विशाखापादस्तथानुराधान्विता ज्येष्ठा । मूलं पूर्वाषाढा प्रथमश्चाप्युत्तरांशको धन्वी । मकरस्तत्परिशेषे श्रवणा चार्द्धं धनिष्ठायाः । कुम्भोऽथ धनिष्ठार्द्धं शतभिषापूर्वभाद्रपदत्रयम् । भाद्रपदायाः शेषस्तथोत्तरा रेवती मीनः" ॥ राशिनक्षत्रभेदकथनम् । "राशिनामानि च चैत्रं

भमृघं रहनाम च। मेषादीनाञ्च पर्य्यायं लोकादेव विनिश्चयेत्"॥ राशिपर्य्यायकथनम्। "क्रिय-तावुरि-जितुम-कुलीर-लेय-पाथेय यूक-कौर्पाख्याः। तौक्षिक आकोकेरो हृद्रोगश्चान्त्यभं चेत्थम्"॥ "अरुणसित-हरित-पाटल-पाण्डु-विचित्राः सितेतरपिशङ्गौ। पिङ्गलकर्बुरवभ्रूमलिनारुचयो यथासंख्यम्"॥ मेषादीनां वर्णभेदकथनम्। "मत्स्यौ घटी नृमिथुनं सगदं सवीणं चापीनरोऽश्वजघनो मकरो मृगास्यः। तौलीससस्य दहनाप्लवगा च कन्या शेषाः स्वनामसदृशाः स्वचराश्च सर्वे"॥ मेषादीनां विशेषनामकथनम्। अश्व-जघनः अश्वाकारजघनो न त्वश्वारूढ़जघनः। उत्तरत्र चतुष्पदत्वकथनात्। राश्यधिष्ठातृदेवताकथनम्। "क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च ओजोऽथ युग्मं विषमः समश्च। चरस्थिरद्व्यात्मकनामधेया मेषादयोऽमी क्रमशः प्रदिष्टाः"॥ राशीनां क्रूरसौम्यादिविवेकः। दैवज्ञमनोहरे। "पुरुषश्च पुंस्त्वश्चैव आधानाख्यस्तथैव च। स्मृत्वा हत्वा हत्वा भवन्त्येते नित्यं द्वादश राशयः"॥ पुरुषादिविवेकः। "मिथुनतुला-घटकन्या द्विपदाख्याश्चापपूर्वभागश्च। मृगधनुरापरार्द्धं वृषाजसिंहाश्चतुश्चरणाः"॥ द्विपदचतुष्पदकथनम्। "कर्कट-वृश्चिकमीना मकरान्त्यार्द्धश्च कीटसंज्ञाः स्युः वृश्चिकराशि-र्मुनिभिः सरीसृपत्वेन निर्दिष्टः"॥ कीटसरीसृपकथनम्। "द्विपदवशगाः सर्वे सिंहं विहाय चतुष्पदाः। सलिलनिलया भक्ष्या वश्याः सरीसृपजातयः॥ मृगपतिवशे तिष्ठन्त्येते विहाय सरीसृपान्। अकथितमहैपूर्वं वश्यं जनव्यवहारतः"। सरीसृपजातयः इति बहुवचनात् कीटस्यापि परिग्रहः। राशीनां वश्यावश्यकथनम्। "यम्यामिथुनतुला स्त्री चापाजिघटा निशाशु प्रथमेषो। मकरादिमार्द्ध सिंहो कन्यो दिवसेऽजवृषभौ

च। जलजौ कर्कटमीनौ मकरास्यार्द्धश्च शिवमते कुम्भः" ॥ ग्राम्यारण्यजलजराशिकथनम्। "ह्रस्वास्तिमिगोविघटा मिथुनं धनुः कर्किमृगसुरयाश्च समाः। वृश्चिककन्यामृगपतिवणिजो दीर्घाः समाख्याताः" ॥ राशीनां ह्रस्वदीर्घकथनम्। "प्रागादिककुभां भाषा यथासंख्यं प्रदक्षिणम्। मेषाद्या राशयो ज्ञेयास्त्रिरावृत्तिपरिभ्रमात्" ॥ दिगधिपकथनम्। "स्वजातीयाऽनेकसंख्याप्रस्तारे वामतो गतिः। इन्तिः पूर्त्तिश्च गुणनेयुतौ तन्मात्रयोजनम् ॥ यावद्गन्तुञ्च शक्नोति तावद्गच्छति शारकः। लब्धं तत्संख्यकं प्राहुर्हीने तन्मात्रखण्डनम्" ॥ अङ्कप्रस्तारकथनम्। "यदोदेति तदा लग्नं राशिः स्यादन्यथ क्रमात्। अयनांशान्वितमानं तद्भूशमिति नोच्यते ॥ राढ़ीयश्रीनिवासोक्तं तन्मान स्थूलतोऽत्र तु। रामाऽश्ववेदे १। ४७। जलधिस्तु मैत्रे ४। १७। बाणोरसैः ५। ६। पक्षखसागरैश्च ५।४०। बाणः क्षुवेदे ५। ४१। विषयोऽङ्कयुग्मैः ५। २८। क्रमोत्क्रमामेषतुलादिमानम्। ते दण्डाद्यैः पलैर्लग्न रविभुक्तांशका: क्रमात्। रात्रौ तत्समचांशाः प्रविष्टा दिवसे तथा। लग्न दण्डपल हित्वा तत्सम्यं क्रमतः पलम्। विपलञ्च रवेर्भोग्यमेवं कल्पनमस्तमे" ॥ लग्नविवेकः। "अर्काङ्गुला तु शून्यपरा बाही द्वाङ्गुलमूलिका। शङ्कुरूपा भवेत्सैव तच्छायां परिकल्पयेत् ॥ मध्याह्नहीनेरादित्ययुग्मैश्छायाङ्गुलैर्हरेत्। षट्पूरितदिवादण्ड लब्ध दण्डादिकं भवेत् ॥ पूर्वाह्णच्छाययातीतं पराह्णच्छाययैष्यकम्। शून्यैकरामबाणेभदिशो रुद्राः।०।१। ३।५।८।१०।११। क्रमोत्क्रमैः। आषाढादिषु मासेषु छाया माध्याह्निकी मता ॥ अयनांशजमासान्तं व्युत्क्रमेणादितो बुधैः। संख्योक्तान्यदिने भागहारे ह्वीतरे तथा"। प्रकारान्तरन्तु। "पञ्चाब्धि रामयुग्मैकशून्यैकयुग्मवह्नयः।

चतुःपञ्चत्तयो ६।४।३।२।१।०।१।२।३।४।५।६। माघात्छायापादा दिनार्द्धके। अयनांशक्रमाद्यान्ते विपादगणनक्रमात्। दिने दिने भागहारो मध्यच्छायापदे मतः॥ षड्ः षड्भं शकोर्ध्वं विरङ्गुलैर्व्यङ्गुलिस्तथा। सयूनं द्विशतं चैनं मध्यपादेय षड्गुणैः। छायापादेय मध्योनै षड्युतैर्द्विगुणैर्हरेत्। याद्यमादिपदार्द्धन्तु लब्धा दण्डा गतैष्यकाः। प्राक्पश्चिमदिनार्द्धात्तु शेषात् षष्टिगुणात् पलम्"॥ दिवादण्डादिज्ञानम्। "मृगसङ्क्रान्तिकः पूर्वं यथा तारादिनान्तरे। एकवर्षे चतुःपञ्चपलमानक्रमेण तु। षट्पष्टिवत्सरानेकदिनं स्यादयन रवेः। एव चतु पञ्चदिनमयनारम्भणं क्रमात् व्युत्क्रमेण च तद्वत् स्यादुदग्यानं रवे ध्रुवम्। कर्किसङ्क्रमणे तद्वदभितो दक्षिणायनम्। अयनांशक्रमेणैव विषुवारम्भणं तथा। रविसंक्रान्तितो मेषतुलयोरभितः पुनः। विषुवं मीनकन्यार्द्धे त्वैकाद्योन्द्रशकाब्दके। दिनमानायमीनार्द्धान्ते वार्द्धं पाक्षिकं मतम्। ततो हयार्द्धपर्य्यन्तमशीतिः पलभाजिनी। मिथुनार्द्धं चतुस्त्रिंशत्पलानां वर्द्धते क्रमात्। कर्कटार्द्धन्तु षट्त्रिंशत् सिंहार्द्धन्तु द्वयशीतकम्। कन्यार्द्धेच द्विनवतिः क्रमात् त्रुट्यति वासरे। कन्यार्द्धाद्रजनीमानं बोध्यं पूर्वक्रमेण हि। दिने दिने भागहारान्मान बोध्य दिवानिशोः। एकमानं दण्डपद्या त्वन्यान्यमाननिर्णयः। षट्पष्टिवत्सरानेवं ततः स्यात् षोडशांशके। पुनस्तद्वत्सरांस्तद्वत् एवं सप्तदशादिके"॥ दिनरात्रिमानम्।

पलदण्डयोः प्रमाणन्तु। "दशगुर्व्वक्षरोच्चारः कालः प्राणः षडात्मकैः तैः पल स्यात्ततः षष्ठ्यादण्ड इत्यभिधीयते"। तेन च "माकान्ते पचस्यान्ते पर्य्याकाशे देशे स्वाप्योः कान्तं वक्त्रं हृत्तं पूर्णं चन्द्रं मत्वा रात्रौ चेत्। चुल्लासः प्राटस्येतस्येतो

राहुः क्रूरः प्रायात्तस्मात्त्वाद्धान्ते स्यं स्यान्ते ग्रह्येकान्ते कर्त्तव्या"। षष्ठ्येकपाठात् पलं षष्टिपाठाद्दण्डः। "सामर्थ्यं तनुकल्पते समुदये वित्तं कुटुम्बं ततो विक्रान्तिं सहजं तृतीयभवने योधश्च सञ्चिन्तयेत्। बन्धुं वाहनसुखालयानपि ततोधीमन्त्रपुत्रांस्ततः षष्ठेऽथ चतविद्विषौ मदगृहे कामं स्त्रियं वर्त्म च। रन्ध्रायुर्मृतयोऽष्टमे गुरुतपोभाग्यानि चित्तं ततो मानाज्ञास्पदकर्मणां दशममे कुर्य्यात्ततश्चिन्तनम्। प्राप्तारावथचिन्तयेद्व्ययगृहे त्वप्यतिनु सज्जिव्ययौ। सौम्यस्वामियुते चणेक्षयचिति-श्चैषां चातिस्त्वन्यथा" ॥ रन्ध्रं पापमिति भट्टोत्पलः। द्वादशभावविवेकः। "चरातिव्रणयोः षष्ठे त्वष्टमे मृत्युरन्ध्रयोः। व्ययश्च द्वादशस्थाने वैपरीत्येन चिन्तनम्" ॥ चरात्यादिभावापवादः। चहीनेन्द्वर्कसौराराः पापाः सौम्यास्तथा परे पापयुक्तो बुधः पापो राहुकेतू च पापदौ। पापसौम्यविवेकः। दशमे च तृतीये च पाददृष्टिरुदाहृता। अर्द्धदृष्टिं नवमे पञ्चमे परिकीर्त्तिता। चतुर्थत्वष्टमे चैव पादोना परिकीर्त्तिता। सप्तमे परिपूर्णा च फलमेव प्रकल्पयते। तृतीयदशमावार्किः पश्यन् पूर्णफलप्रदः। त्रिकोणगान् गुरुश्चैव चतुर्थाष्टमगान् कुजः। सुतमदनवमान्त्ये पूर्णदृष्टिः सुरारेर्युगलदशमरासौ दृष्टिपादत्रयार्द्धः। सहजरिपुचतुर्थ्येष्टमे चार्द्धदृष्टिः स्थितिभवनमुपान्त्यं नैव दृश्यं हि राहोः" । ग्रहाणां राहोश्च दृष्टिः। मेषो वृषो मृगः कन्याकर्किमीनतुलाधराः। भास्करादेर्भवन्त्युच्चा राशयः क्रमशस्त्विमे। रविर्मेषे वृषे चन्द्रो गुरुः कर्के बुधः स्त्रियां शनिर्युके मृगे भौमः शक्रो मीने च तुङ्गिनः। त्रिंशद्भागे दिशोरामा अष्टाविंशस्तिथिस्तथा। पञ्च वै सप्तविंशाश्च विंशतिश्चोच संज्ञकाः। स्वोच्चाच सप्तमं नीचं प्राग्ज्ञावैर्विनिर्दिशेत्। उच्चान्तःसूत्रसंज्ञः स्यात् नीचान्तस्तु सुनी-

चकः। परिपूर्णबलः सूच्चे सुनीचे दुर्बलो ग्रहः। सूच्चसुनी-चयोरन्तर्भागं हारात् फलं तथा"। उच्चनीचकथनम्। "सिंहो वृषश्च मेषश्च कन्या धन्वीघटो घटः। अर्कादीनां त्रिकोणानि मूलानि राशयः क्रमात्"। मूलत्रिकोण कथनम्। रवि-भौमजीवभार्गवशनैश्चराणां त्रिकोणभागाः स्युः। नखरविदिक् तिथिनखराश्चेन्दोर्दिगुभां शकाः सूचात्" ॥

मूलत्रिकोणांशव्यवस्था। "उक्षं नृयुग्मं घटभं त्रिकोणं कन्यागृहं शुक्रशनी च मित्रे। सूर्यः शशाङ्को धरणीसुतश्च राशोरिपुर्विंशतिकः परांशः। सिंहस्त्रिकोणं धनुरस्य सञ्ज्ञं मीनो गृहं शुक्रशनी विपक्षौ। सूर्यारचन्द्राः सुहृदः समानौ जीवेन्दुजौ षट्शिखिनः परांशाः। वाइकेत्वोरथवादित्वं होराथ द्रेक्काणनवांशद्वादशांशकः। त्रिंशांशकश्च षड्वर्गा-स्तरादि प्राप्यफलप्रदाः"। इति षड्वर्गाः। "कुजशुक्रबुधे-न्द्वर्कसौम्यशुक्रावनीभुवाम्। जीवार्किमासुजेज्यानां क्षेत्राणि स्युरजादयः। विषमर्क्षेषु प्रथमा होराः स्युश्चण्डरोचिषः द्वितीयाः शशिनो युग्मव्यत्ययादूगणयेत् सदा। स्वपञ्चनवमानां हि राशीनामधिपा ग्रहाः। ते द्रेक्काणाधिपाराशौ द्रेक्काणा-स्तय एव हि। मेषकेशरिधनुषां मेषाद्याश्च नवांशकाः। मृग-कन्या वृषाणाञ्च मृगाद्यास्तु नवांशकाः। तुलामिथुनकुम्भानां तुलाद्याः समुदाहृताः। कर्किवृश्चिकमीनानां कर्कटाद्या नवां-शकाः। चराणां प्रथमे भागे स्थिराणां पञ्चमे तथा। नवमे द्यात्मका नाम्न वर्गोत्तम इति स्मृतः। स्वनवांशस्तु राशीनां वर्गोत्तम इति स्मृतः सर्वेषां मेषपूर्वाणां स्वाद्या द्वादशां-शकाः। कुजार्किगुरुसौम्यानां भागाः शुक्रस्य च क्रमात्। पञ्चपञ्चाष्टसप्तेषु ज्ञेयमोजःसु राशिषु। त्रिंशांशाव्यत्यया ह्येते युग्मराशिषु कीर्तिताः"। इति षड्वर्गकथनम्। "अजोगो-

प्रतियुग्मञ्च कर्किधन्विमृगास्तथा। निशासंज्ञाः स्मृतास्त्वेते शेषाश्चान्ये दिनात्मकाः। निशा संज्ञा विमिथुनाः स्मृताः पृष्ठोदयास्तथा। शेषाः शीर्षोदयाश्चैते मीनश्चोभयसंज्ञकः। निशादि संज्ञाकथनम्। "षष्ठत्रिदशलाभाश्च लग्नादुपचयाः स्मृताः। पञ्चमं नवमं स्थानं त्रिकोणं केवलं स्मृतम्"। उपचयत्रिकोणकथनम्। केन्द्रं चतुष्टयं कण्टकञ्च लग्नास्तदशचतुर्थानां संज्ञा"। केन्द्रपर्याय तत् स्थानयोः कथनम्। पनफरं द्वितीयाष्टपञ्चमैकादशं विदुः। तृतीयषष्ठनवममन्त्यञ्चापो क्लिमं विदुः"। पनफरापो क्लिम तत् स्थानकथनम्। "पातालं हिबुकञ्चैव सुहृद्बन्धुचतुर्थकम्। त्रित्रिकोणञ्च नवमं दुश्चिक्यं स्यात् तृतीयकम्। धीस्थानं पञ्चमं ज्ञेयं यामित्रं सप्तमं स्मृतम्। द्युनं द्यूनं तथास्ताख्यं षट्कोणं रिपुमन्दिरम्। कर्मस्थानञ्च दशमं खं मे शूरणमास्पदम्। छिद्राख्यमष्टमं स्थानं रिष्फाख्यं द्वादशं स्मृतम्। चतुर्थमष्टमञ्चैव चतुरस्रं विदुर्बुधाः"॥ चतुर्थादिपर्यायः। "हेलिः सूर्य्यश्चन्द्रमाः शीतरश्मिर्हेम्ना विज्ञो बोधनश्चेन्दुपुत्रः। आरोवक्रः क्रूरदृक्चावनेयः कोणो मन्दः सूर्य्यपुत्रोऽसितश्च। जीवोऽङ्गिराः सुरगुरुर्वचसां पतीज्यो शुक्रो भृगुर्भृगुसुतः सित आस्फुजिच्च। राहुस्तमो गुरुसुरश्च शिखी च केतुः पर्य्यायमन्यमुपलभ्य वदेच्च लोकात्"। ग्रहसंज्ञाकथनम्। "रक्तश्यामो भास्करो गौर इन्दुर्नात्युच्चाङ्गो रक्तगौरो महीजः। दूर्वाश्यामोज्ञो गुरुर्गौरगात्रः श्यामः शुक्रो भास्करिः कृष्णदेहः"। ग्रहाणां वर्णकथनम्। "सूर्य्यः शुक्रः क्षमापुत्रः सैंहिकेयः शनिः शशी। सौम्यस्त्रिदशमन्त्री च प्राच्यादि दिगधीश्वराः। प्राच्यां सौम्य सुराचार्य्यौ याम्यां भास्करभूमिजौ। प्रत्यक् सौरिश्चटीच्यान्तु सितेन्दू दिग्बलान्वितौ"। दिग्बलिकथनम्। "भौमार्कजीवाः पुरुषाः क्लीबो भौमजभानुजौ।

स्याद्यौ भार्गवचन्द्रौ द्वौ तत्पतिलाल्तयोच्यते"। पुंप्रभृतिनि-र्णयः। "चन्द्रार्कजीवाज्ञसितौ कुजार्कौ यथाक्रमं सत्त्वरज-स्तमांसि। कटुलवणतिक्तमिश्रितामधुराम्लौ च कषायकोऽ-र्कात." । गुणरसाधिपकथनम् । "ब्राह्मणे शुक्रवागीशौ चत्रिये भौमभास्करौ । चन्द्रो वैश्ये बुधः शूद्रे पतिर्मन्दोऽन्त्यजे जने" । जात्यधिपकथनम्। "ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपः सितः। सामवेदाधिपो भौमः शशिजोऽथर्ववेदराट्" । वेदा-धिपकथनम्। मधुपिङ्गलदृक्चतुरस्रतनुः पित्तप्रकृतिः सवि-ताल्पकचः। तनुवृत्ततनुर्बहुवातकफः प्राज्ञः शशी मृदुवाक् शुभदृक्। भूमिजस्तरुणमूर्त्तिरुदारः पैत्तिकः सुचपलः कृश-मध्यः। श्लिष्टवाक् सततहास्यरुचिर्ज्ञः पित्तमारुतकफप्रकृ-तिश्च। इहत्तनुः पिङ्गलमूर्द्धजेक्षणो इहस्पतिः श्रेष्ठमतिः कफात्मकः। भृगुः सुखी कान्तवपुः सुलोचनः कफानिलात्मा सितवक्रमूर्द्धजः। मन्दोऽलसः कपिलदृक् कृशदीर्घगात्रः स्थूलद्विजः परुषलोमकचोऽनिलात्मा। रव्यादीनां क्रमेण स्वभावकथनं मित्राणि सूर्य्यात्सुगिभौमजीवाः सूर्य्येन्दुजौ सूर्य्यशशाङ्कजीवाः। आदित्यशुक्रौ रविचन्द्रभौमा बुधार्कजौ चन्द्रजभार्गवौ च। एकैकविभक्त्यन्तैः सूर्य्यादेः क्रमेण मित्र-कथनम् । "सितासितौ चन्द्रमसो न कश्चित् बुधः शशी सौम्य-सितौ रवीन्दू। रवीन्दुभौमा रवितस्त्वमित्रामित्रारिशेषस्तु समः प्रदिष्टः॥ बुधः कुजेज्यास्फुजिदर्कपुत्राः शुक्रार्कजौ भौम-सुरेज्यमन्दाः। शनिः कुजेज्यौ सुरराजमन्त्रीरव्यादितोऽमी समसंज्ञिता स्युः"॥ एकैकविभक्त्यन्तैः समकथनम् । "चतुर्दशवित्तान्त्यविलाभस्थाः परस्परम् । तत्कालमित्राण्य-स्य. कीर्यदुक्तोऽन्यथा रिपुः"॥ तत्कालमित्रादिविवेकः । हितसमरिपुसञ्ज्ञा ये निसर्गं निरुक्ताः चधिश्रितहितमध्यास्तेऽपि

तत्कालमित्रैः। रिपुसमसुहृदाख्या ये निसर्गोपदिष्टा अधिरिपुरिपुमध्याः शत्रुमित्रिचिन्तनीयाः। अधिमित्रादिकथनम्। स्वोच्चे स्थिताः श्रेष्ठबला भवन्ति मूलत्रिकोणे स्वगृहे च मध्याः। इष्टेक्षिता मित्रगृहाश्रिता वा वीर्यं कनीयः समुपावहन्ति। लग्नांशाधिपयोर्यादृक् बलं तादृक् तयोरपि। पतितत्प्रियबुधसौम्योक्षस्थैर्युतवीक्षितो बली राशिः। "अल्पबलोऽन्यैर्मिश्रैर्मध्यबलः सर्वयुतेक्षितस्त्वबलः। जीवज्ञपतिभिर्दृष्टोयुतो वातिबली भवेत्॥ मित्रैर्मिश्रबली ज्ञेयो राशिः पापैस्तु दुर्बलः। स्वोच्चत्रिकोणस्थितमस्तगादादिवर्गसंस्थाः समे शशिसितौ विषमेऽवशेषाः। पुंस्त्रीनपुंसकखगाभसुखाख्यमध्यमस्थाः शुभेक्षितयुतास्विति वीर्यवन्तः"॥ ग्रहाणां बलकथनम्। मार्कण्डेयपुराणम्। "द्रव्ये गोष्ठेषु भृत्येषु सुहृत्सु तनयेषु च। भार्य्यायाञ्च ग्रहे दुष्टे भयं पुण्यवतां नृणाम्॥ आत्मन्यथाल्पपुण्यानां सर्वत्रैवातिपापिनाम्। न कुत्रापि ह्यपापानां नराणां जायते भयम्"॥ भविष्यपुराणम्। "अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च। नित्यञ्च नियमस्थस्य सदानुग्राहका ग्रहाः"॥ ज्योतिषे। "रविमासं निशानाथः सपाददिवसद्वयम्। पक्षत्रयं भूमिपुत्रो बुधोऽष्टादश वासरान्॥ वर्षमेकं सुराचार्य्योऽष्टाविंशद्दिनं भृगुः। शनिः सार्द्धद्वयं वर्षं स्वर्भानुः सार्द्धवत्सरम्॥ एवं प्रमाणात् भक्तशः स्वराशिं भुञ्जते ग्रहाः। वक्रशीघ्रगतिर्येषु स्यात् भौमादिपञ्चकेऽन्यथा॥ केतुपक्षवभौममन्दगतयः षट्त्रिसंस्था शुभाः चन्द्रार्कावपि ते च तौ च दशमो चन्द्रः पुनः सप्तमः। जीवः सप्तनवद्विपञ्चमगतो युग्मेषु सोमात्मजः शुक्रः षड्दशसप्तवर्ज्जितरे सर्व्वाप्युपान्ते शुभाः"। गोचरशुद्धिः। राजमार्त्तण्डे। "वक्रातिचारोपगताश्च खेन्द्रा यत्र स्थिताश्च फलं प्रदद्युः। पनि-

ष्टमिष्टं नियतं नराणां भौमादयो यानविवाहजन्मसु" ॥ गोचरे तु। "वक्रातिचारोपगमे ग्रहाणां क्षतस्व फल राशिगतं वदन्ति। शुभाशुभौ जीवबुधौ न तस्मिंस्तयोस्तु पूर्वं फलमादिशन्ति। तारावलादिन्दुरथेन्दुवीर्य्याद्दिवाकरः संक्रममाप सक्तः। ग्रहास्तु सर्वे सवितुर्बलेन महीसुतायाः शुभदा निरुक्ताः। नाडीनक्षत्रदिवसे रविभौमशनैश्चराः। संक्रान्तिं यस्य कुर्वन्ति तस्य क्लेशोऽभिजायते। गोमूत्रसर्षपैः स्नानं सर्वौषधिजलेन च॥ विशुद्धं काञ्चनं दद्यात् नाडीदोषोपशान्तये। सुरामांसी वचाकुष्ठं शैलेयं रजनीद्वयम्॥ शठीचम्पकमुस्ताश्च सर्वौषधिगणः स्मृतः"॥ कषायावयवग्रहणे मत्स्यपुराणम्। "एषां पत्राणि साराणि मूलानि कुसुमानि च। एवमादीनि चान्यानि कषायाख्यो गणः स्मृतः"॥ अत्रायुर्वेदोक्तपरिभाषा। "चाङ्गेऽप्यनुक्ते विहितन्तु मूलं भागेऽप्यनुक्ते समता विधेया। द्रव्येऽप्यनुक्ते विहितन्तु तोयं कालेऽप्यनुक्ते दिवसस्य पूर्वम्॥ भुस्तुरबीजसलिलैः स्नायात् संक्रान्ति शान्तये। तथा सर्वौषधीभिश्च विष्णुमन्त्रांश्च संजपेत्"॥

अथ रविसंक्रान्तिगणनम्। "नवाष्टशक्रहीनेन शकाब्दाङ्केन पूरिताः। भूर्वाणचन्द्रावेकाग्नि क्रुरामौ वेदयुग्मके। १। १५। २१। २१। २४। षष्ठा चतुष्पलादेस्तु षष्ट्या लब्धाङ्कमिश्रिताः। दण्डात् खाग्नी इषेषु च। ३०। ५७। पलादित्वा ततः पुनः। सप्तावशिष्टा वाराः स्युस्ततो दण्डादिकाः परे। मेषसंक्रमणे भानोः सिद्धान्तस्फुटसम्मताः। भुजौ षडिषूरामाग्नौ। २। ५६। ३२। कालो जातिगजाग्नौ। ६। २२। १८। रामचन्द्रोऽग्नियुग्मञ्च ३। १। २३। तर्कोऽङ्कदृक् नगाशुगौ। ६। २८। ५८। द्वावङ्कदृक् वेदबाणा २। २९। ५४। अब्धिर्बाणशरौ सुराः। ४। ५५। ३३। पक्षागवेदौ शून्येन्दू।

६। ४८। १०। एकं श्रेत्रभुवो शराः १। १०। ५। द्वौ षड्ग्नो तथाकाला। २। ३६। ६। अथोरामाः शरावनी। ४। १। १५। पञ्चाग्नीषु तथा रुद्रा ५। ५२। ११। मेषसंक्रमवासरः। षड्भिर्योज्या वृषादेस्तु वाराद्या संक्रमे रवेः। मृगकर्कटसंक्रान्ती द्वे उदगदक्षिणायने॥ विषुवती तुला मेषे गोमध्ये तथापराः। धनुर्मिथुनकन्यासु मीने च षड़शीतयः॥ वृषवृश्चिककुम्भेषु सिंहे विष्णुपदी स्मृता। मूर्ध्नि सप्तमुखे त्रीणि हृदये पञ्च विन्यसेत्॥ त्रितयं हस्तपादेषु महाविषुवमक्रमात्। मस्तके भूपतिः सौख्यं वदने पटुता शुभे॥ हृदये च धनाध्यक्षोऽर्थप्राप्तिर्दक्षिणे करे। वामे करे महद्दुःखं सुखं पादे च दक्षिणे। भ्रमणं वामपादे च कथितं विषुवत् फलम्॥

षड्मूर्ध्नि वदने पञ्च चत्वारि हृदये तथा। त्रितयं करपादेषु पयो विषुवक्रमात्। स्नानं मूर्ध्नि मुखे वैरं हृदये सुखसम्भवः। द्वोः पदोर्दक्षयोर्भोगस्त्रासश्च वामयोः स्मृते"। जलविषुवफलम्। "शीर्षे पञ्चमुखे त्रीणि हस्तयोश्च त्रयं त्रयम्। हृदि पञ्च गर्भेनाभौ गुदे च पादयो रसाः। उत्तरायणभाजश्चैवं स्तनवक्षस्थितिः फलम्। शीर्षेऽथ लाभो वदने सुखानि दक्षे करेऽद्धौ हृदये च सौख्यम्। नाभौ शुभं वामकरेऽर्थनाशो गुह्ये भयं वामपदे प्रवासः"। उत्तरायणफलम्। "शीर्षे त्रीणि मुखे त्रीणि हृदये पञ्च हस्तयोः। चष्टौ पादद्वयेऽप्यष्टौ दक्षिणायनभक्रमात्। शीर्षे मानं मुखे श्रिया हृदये वित्तसञ्चयः। प्रवासः स्यात् करे वामे भिक्षालाभश्च दक्षिणे। निष्फलं वामपादे च किञ्चिल्लाभश्च दक्षिणे"। दक्षिणायनफलम्। "ऋक्षे संक्रमणं यत्र विष्णुपद्यां मुखे तु तत्। चत्वारि दक्षिणे बाहौ त्रीणि त्रीणि पदद्वये। चत्वारि वामबाहौ च हृदये पञ्च निर्दिशेत्। चरणोर्द्वयं द्वयं योज्यं मूर्ध्नि द्वौ चेक्ष-

गुदे"। फलम्। रोगो भोगस्तथा यानं बन्धनं लाभ एव च। ऐश्वर्य्यं राजपूजा च चपमृत्युरिति क्रमात्"। विष्णुपदी-फलम्। "मुखे चैकं करे वेदाः पादयुग्मे द्वयं द्वयम्। क्रोडे वामस्तथा वेदाः करे सव्येतरेऽपि च। द्वयं द्वयं तथा नेत्रे मस्तके चितयं तथा। द्वयश्चैव तथा गुह्ये षडशीत्यां रवौ स्थिते। सुखे दुःखं करे लाभः पादयोर्भ्रमणं हृदि। कान्ता स्याद्वदने वामे हस्ते स्यात् सौख्यमेव नृणाम्। सम्मानं नेत्रयो-श्चैव चपमानञ्च मस्तके। गुह्ये चैव भवेन्मृत्युः षडशीतिफल-श्रुतिः"। षडशीतिफलम्। "शीर्षे चत्वारि राज्यं जलधि-रपि करे दक्षिणे चापि सौख्यं चैकं कण्ठे विभूतिं मदनशर-मितं वक्षसि प्रीतिसंघम्। पादस्थाः षट् च पीडां पुनरपि जलधिर्वामहस्ते च मृत्युं नेत्रे त्रीणि प्रदद्युः सुखमथ निजभे वाक्पतेः संक्रमर्क्षात्"। गुरुमचारफलम्। गोचरपीडाया-मपि राशिर्बलिभिः। शुभपरैर्दृष्टः। पीडां न करोति तथा पापैरेवं विपर्य्यासः"। गोचरापवादः। "दिनकरकधिरौ प्रवेशकाले गुरुभृगुजौ भवनस्य मध्ययातौ। रविसुतशशिनौ विनिर्गमस्थौ शशितनयः फलदस्तु सर्वकालम्"। राशिविभा-गात् फलम्। "सप्तमोपचयाद्यस्थश्चन्द्रः सर्वत्र शोभनः। शुक्ल-पक्षे द्वितीयस्तु पञ्चमो नवमस्तथा। सितशनिकुजजीवार्काश्च इन्दुर्नराणां व्ययसुखनवमस्थोऽपोष्टदाताश्च तेषाम्। खसुतनि-धनगश्चेत् स्त्रलुप्तार्थगोऽपि प्रचुरशुभफलः स्यात् वामवेधेन युक्तः"। वामवेधलक्षं यूनजन्मेति एवमन्येति वक्ष्यमाणवचना-भ्यामेकार्थत्वाद्बोध्यम्। "उपचयकरयुक्तः सव्यगः शुक्लपक्षे शुभमभिलषमाणः सौम्यमध्यस्थितो वा। सखिवशिगटद्युक्तः कारकश्चेऽपि चेन्दुर्जयधनसुखदाता तत् प्रवृत्तान्यथात्"। सव्यग उत्तरायणचारी। उपचयकरस्य पश्चाद्वर्त्ती वा श्रत-

एवोक्तम्। "भानां यथा सम्भवमुत्तरेण पश्चाद्ग्रहाणां यदि वा शशाङ्कः। शुभप्रदानां शुभदः प्रयाणे याम्येन यातो न शुभः शशाङ्कः। यो यस्य दृश्यस्थगः स तस्य वशी भवति नियमेन। स्वर्चतुङ्गमूलत्रिकोणगाः कण्टकेषु यावन्त आस्थिताः। जन्मकालवशगास्ते तु कारकाः कर्मगास्तु तेषां विशेषतः। सितपक्षादौ चन्द्रे शुभे शुभं पक्षमशुभमशुभे च। कृष्णे गोचरशुभदो न शुभः पक्षः शुभोऽतोऽन्यः"। भीमपराक्रमे। "शुक्ले पक्षे प्रतिपदि चन्द्रे शिवे शिवं पक्षम्। कृष्णे प्रतिपदि ताराशुद्धौ शुभं विदुः पक्षम्"। बादरायणः। "शीतांशुर्मिष्टमन्नं जनयति सततं जन्मराशौ नराणां द्वयं दैत्येन्द्रमन्त्री दिवसकरकुजौ शत्रुपक्षस्य वृद्धिम्। हानिं कुर्य्यादसूनां किरणपतिसुतौ बन्धनं सोमपुत्रो नित्यं निर्धूतबुद्धिं प्रवत्तरिपुबलं वित्तनाशञ्च जीवः। भेदं मित्रजने करोति दिनकृत् क्षेमं ध्यं चन्द्रमाः। सौरिर्वित्तविनाशमृच्छति सदा लाभं ददातीन्दुजः। हानिं भूमिसुतः करोति महतीं भोगान् भृगोरात्मजो ज्ञानं दीपयति तृतीयभवने जीवो नृणां निर्वृतिम् २। तृतीये तिष्ठन्तः खरकिरणभौमार्कतनयाः स्थिरस्थानप्राप्तिं ददति मनुजस्तुष्टपरमाम्। विनाशं शत्रूणां जनयति शशी चन्द्रतनयः परं स्वस्तापं त्रिदशपतिमन्त्री च कुरुते। ३। सुतां शास्त्रविरोधिकामपि धियं मूढां करोत्यङ्गिराः घोरां दुःखपरम्परां दिनकरः कुर्य्यामयं चन्द्रमाः। सौम्यो रोगविनाशमिच्छति नृणां रोगद्वयं भार्गवो भौमः शत्रुभयं चतुर्थभवने सौरिश्च वित्तक्षयम्। ४। दौर्भाग्यं शशलाञ्छनः क्षितिसुतयोर्दिग्मतां चेतसो दोषोत्पत्तिमनुत्तमां रविसुतः स्निग्धैर्वियोगं रविः। दौर्भाग्यं विदधाति चन्द्रतनयः प्रीतिं परां भार्गवः कुर्य्यात् पञ्चमराशिगोचरगतो जीवो नृणां निर्वृतिम्। ५। स्थिताः षष्ठे राशौ

दिनकरमहीजार्कतनया बुधचन्द्रावेवं प्रचुरधनधान्यानि ददति। समृद्धिं शत्रूणां मनसि च विषादं सुरगुरुर्भृगुर्नाशं कुर्य्यात् युवतिकृतवैरञ्च परमम्। ६। स्त्रीलाभं शशलाञ्छनोऽर्कतनय-श्चोद्विग्नतां चेतसो भौमश्चापि धनक्षयं सुरगुरुर्वस्त्रादिकाः सम्पदः। सौम्योऽरोगकरो भवेत् प्रकुपितो रोगाश्रयं भार्गवः सूर्य्यश्चापि करोत्यनिष्टमतुलं राशौ स्थितः सप्तमे। ७। कुतवह-भयमारचन्द्रजः सौख्यसुतं घनचरणमथार्किभार्गवश्चार्थलाभम्। मरणमथ पतङ्गस्थाननाशं सुरेज्यः सृजति निधनसंस्थो नैव-रोगञ्च चन्द्रः। ८। धर्मस्थाने दिनकरसुतो नाशमर्थस्य कुर्या-द्रोगं सौम्यो धरणितनयोर्भोगवश्चार्थलाभम्। त्रासं सोमो जनयति नृणां शोकविद्वेषमर्कः स्थानं मानं पशुसुतयुतञ्चापि जीवः प्रकामम्। ९। सौम्योऽन्तःशान्तिसुखं जनयति दशमः सूर्य्यसूनुः प्रकामां ख्यातिं भौमः समृद्धिं पशुपतिमुकुटोद्घृष्ट-पादः शशाङ्कः। प्राधान्यञ्चार्थलाभं दशशतकिरणः कर्मगः कर्मसिद्धिं मित्राणां दैत्यपूज्यः क्षतिमपि कुरुते प्रीतिभेदञ्च जीवः। १०। जीवावनेय रविसौरिसुरारिपूज्यचन्द्रश्च चन्द्र-तनयश्च विधुन्तुदश्च। एकादशे च भवने सततं नराणां भौमा-श्वमानधनधान्यकरा भवन्ति। ११। जीवः सहस्रकिरणश्च शनैश्चरश्च वक्रश्च वक्रचरितश्च निशाकरश्च। कुर्य्युर्वियोगबध-बन्धभयं नराणां शुक्रेन्दुजौ धृतिकरौ रविसंस्थराशौ"। १२। वसिष्ठे। "स्थानं जन्मनि नाशयेद्दिनकरः कुर्य्याद्द्वितीये भयं दुर्य्यशे श्रियमातनोति हिबुके मानक्षयं यच्छति। दैन्यं पञ्चमगः करोति रिपुहा षष्ठेऽथवा सप्तमः। पीडामष्टमगः करोति नितरां कान्तिक्षयं धर्मगः। कर्मण्यविजनकस्तु कर्मणो वित्तमायकृदथायसंस्थितः। द्रव्यमाशमनितां महापदं यच्छति व्ययगतो दिवाकरः। र। जन्मन्यथ दिशति हिम-

गुर्वित्तनाशं द्वितीये दद्याद्द्रव्यं सहजभवने कुचिरोगं चतुर्थः । कार्य्यभ्रंशं तनयगृहगोवित्तलाभञ्च षष्ठो यूने द्रव्यं युवतिसहितं मृत्युसंस्थोऽपि मृत्युम्। नृपभयं कुरुते नवमः शशी दशमधामगतस्तु महत्सुखम् । विविधमायगतः कुरुते धनं व्ययगतस्तु करोत्यधनक्षयाम्" । च "प्रथमगृहः क्षीणोऽसुनुः करोत्यरिजं भयम्। क्षपयति धनं वित्तस्थाने तृतीयगतोऽर्थदः करिभयकरः पातालेऽसृन् क्षिणोति च पञ्चमो रिपुरहगतो धत्ते वित्तं शुभं मदनस्थितः । जनयति मरणस्थः शस्त्रधारा धराजो दिशति च नवमस्थः कार्य्यपीडामतीव। शुभमपि दशमस्थो लाभगो भूमिलाभं व्ययभवनगतोऽसौ व्याध्यनर्थार्थनाशान्"। मं। "बुधप्रथमधामगो दिशति बन्धमर्थे धनं बध रिपुभयान्वितं सहजगश्चतुर्थेऽर्थदः । धननिवृत्तिकरो भवेत् तनयगोरिगः स्थानदः करोति मदनस्थितो बहुविधां शरीरापदम्। अष्टमे शशिसुते धनलब्धिर्धर्मगेऽतिमहतीं तनुपीडाम्। कर्मगो सुखमथायगतोऽर्थदो द्वादशे भवति वित्तविनाशः"। बु। "भयं जन्मन्यार्य्यो जनयति धनस्थोऽर्थमतुलं तृतीयोऽङ्गे क्लेशं दिशति च चतुर्थोऽर्थविषमम्। सुखं पुत्रस्थाता शुभमपि च कुर्य्यादरिगृहे यूने भूभृत् पूजां धननिचयनाशञ्च निधने। धर्मगतो धनवृद्धिकरः स्यात् प्रीतिहरो दशमोऽमरपूज्यः। स्थानधनानि ददाति स चाये द्वादशगस्तनुमानसपीडाम्"। वृ। "जन्मन्यरिक्षयकरो भृगुजाऽर्थदोऽर्थे दुश्चिक्यगः सुखकरो धनदश्चतुर्थे स्यात् पुत्रगस्तनयगोऽरिगतोऽरिवृद्धैः शोकप्रदो मदनगा निधनेऽर्थदाता। जनयति विविधाम्बराणि धर्मेऽपि शुभकरो दशमस्थितस्तु शुक्रः। धननिचयकरस्तु लाभसंस्थो व्ययभवनेऽपि धनागमं करोति"। शु। "वित्तभ्रंशं दिनकरतनयो जन्मराशिं

प्रपन्नयित्तक्षयं द्वितीयो रिपुहननकृतं वित्तलाभ तृतीयः। पाताले शत्रुवृद्धिं सुतभवनगतः पुनस्तल्लाथनाशं षष्ठस्थानेऽर्थं लाभे जनयति मदने दोषसंघातमार्किः। शरीरपीडां निधनेऽथ धर्मे धनचयं कर्मणि दौर्मनस्यम्। उपान्तगो वित्तमनर्थमन्ते शनिर्ददातीत्यवदत् सुवित्तम्" ॥ श। "जन्मान्त्यपञ्चवसुरन्ध्रचतुर्द्विसप्तराशौ स्थितो यदि भवेदसुरः कदाचित्। अर्थक्षयं रिपुभयं बहुकार्य्यहानिं रोगप्रवासमरणाग्निभयं करोति" ॥ रा। "एकादशत्रिदशषष्ठगतो नराणां सम्मानभोगनृपमानसुखार्थदाता। आज्ञाकराश्च पुरुषाः प्रमदाश्च नित्यं सौख्यादिकं दिशति पुण्यमयश्च केतुः" ॥ के। इति ग्रहाणां गोचरफलम्।

अथाष्टवर्गः। "लग्नकालग्रहस्थित्या फलं वक्ष्ये शुभाशुभम्। स्वादिनतात् शुभदः क्षितिपञ्चसुद्गनगादिकपञ्चगतो १। २। ४। ७। ८। ९। १०। ११। अथ विभावरिभर्तुरुपञ्चदर्शेषगतो। ३। ६। १०। ११। अथ कुजाद्रविव। १। २। ४। ७। ८। ९। १०। ११। दश सौमसुताच्छिशरसुनवादिषु यातः। ३। ५। ६। ९। १०। ११। १२। देवगुरोर्विंययसुनवेशगतो। ५। ६। ९। ११। अथ सुरारिगुरोः समयाचलभास्करयातः। ६। ७। १२। तीक्ष्णमरीचिसुतादपि भास्करवत् १। २। ४। ७। ८। ९। १०। ११। अथ लग्नगृहात् त्रिसताङ्गदशादिषु यातः"। ३। ४। ६। १०। ११। १२। रविरेखाः। ४८।

"चन्द्रः शुभोऽर्कात्त्रिकामाद्रिदन्तावमायाशिवस्य। ३। ६। ७। ८। १०। ११। स्वतः स्वात्कुरामलंगाशाशिवस्यः। १। ३। ६। ७। १०। ११। कुजात्त्रिवह्नौषु यन्त्रोदिग्गोशेष्वथ। २। ३। ५। ६। ९। १०। ११। ज्ञात्कुरामाब्धिशाणगदन्तावलाशाशिवस्यः। १। ३। ४। ५। ७। ८। १०। ११। लोयात्

कुद्दग्वेदशैलेभकाष्ठाशिवस्थोऽथ । १ । २ । ४ । ७ । [illegible] । १० । ११ । शुक्राग्निवेदेषु शैलग्रहाशाशिवस्थः । ३ । ४ । ५ । ७ । ९ । १० । ११ । तीक्ष्णांशुदेहोद्भवाद्रामबाणर्त्तुशम्भुस्थितो । ३ । ५ । ६ । ११ । ऽथोदयाद्व्यथबाणर्त्तुकाष्ठाशिवस्थः” । ३ । ६ । १० । ११ । चन्द्ररेखाः । ४९ । “कुजोऽर्काच्छुभो वह्निबाणर्त्तुदिक्शम्भुगो । ३ । ५ । ६ । १० । ११ । ऽथेन्दुतोरामकालेभग । ३ । ६ । ११ । स्वतः स्यात् कुद्दग्वेदसप्ताष्टदिक्शम्भुगः स्यात् । १ । २ । ४ । ७ । ८ । १० । ११ । निशानाथपुत्रादगुणेष्वङ्गरुद्रोपयातः । ३ । ५ । ६ । ११ । ततोजीवतः कालकाष्ठाशिवार्कोपयातो । ६ । १० । ११ । १२ । ऽथ देवारिपूज्याद्दनेशो गजेशार्कसंस्थः । ६ । ८ । ११ । १२ । ततः सूर्य्यपुत्रात् कुवेदागनागग्रहाशाशिवस्थो । १ । ४ । ७ । ८ । ९ । १० । ११ । ऽथ लग्नात् कुरामाङ्गदिक् शम्भुयातः” । १ । ३ । ६ । १० । ११ । कुजरेखाः । ३९ । “स्वः शुभोऽर्कतः शरर्त्तुगो शिवार्कगो । ५ । ६ । ९ । ११ । १२ । ऽथ चन्द्रतो द्विवेदकालनागदिक्महेश्वरेषु गः । २ । ४ । ६ । ८ । १० । ११ । भूमिजात् कुद्दक्कृतागनागगो दशेशग: । १ । २ । ४ । ७ । ८ । ९ । १० । ११ । ततः स्वतः कुवह्निपञ्चयन्त्रवादिकेषु गः । १ । ३ । ५ । ६ । ९ । १० । ११ । १२ । वाक्पतेरसाष्टशम्भुसूर्य्यगो । ६ । ८ । ११ । १२ । ऽथ शुक्रतः कुबाहुवह्निवेदपञ्चनागगो शिवेषु । १ । २ । ३ । ४ । ५ । ८ । ९ । ११ । पङ्गुतः कुद्दक्कृतागनागादिपञ्चकस्थितोऽथ । १ । २ । ४ । ७ । ८ । ९ । १० । ११ । १२ । लग्नतः क्षितिद्विवेदकाम्भनागदिक् शिवेषु गः” । १ । २ । ४ । ६ । ८ । १० । ११ । वुधरेखाः । ५५ । “सुरराजगुरुः शमदो रवितः कुयमानलवेदनगादिकपञ्चगतो । १ । २ । ३ । ४ । ७ । ८ । ९ । १० । ११ । ऽथ विधोर्द्विशरास्त्रलगो शिवगो । २ । ५ । ७ । ९ । ११ ।

वसुधातनयात् क्रुयमाब्धिनगाष्टदशेशगतो । १ । २ । ४ । ७ । ८ । १० । ११ । ऽथ बुधात् चितियुग्मऋतेषु रसग्रहदिक्गिरिशोपग । १ । २ । ४ । ५ । ६ । ८ । १० । ११ । सुदनुखत एकयमानलवारिधिपर्वतनागदशेशगतो । १ । २ । ३ । ४ । ७ । ८ । १० । ११ । ऽथ सितात्यमपञ्चरसग्रहदिक्शिवगो । २ । ५ । ६ । ८ । १० । ११ । रविनन्दनतो दहनेषु रसार्कगतः । ३ । ५ । ६ । १२ । स्वय लग्नदृशात् क्रुयमाब्धिशरर्त्तुनगदिग्गिरिशोपगतः" । १ । २ । ४ । ५ । ६ । ७ । ८ । १० । ११ । गुरुरेखाः । ५६ । "भृगुः शुभो रवेर्गजेशसूर्यगो । ८ । ११ । १२ । ऽथ चन्द्रतः क्षमादिपञ्चकाष्टगो शिवार्कगः । १ । २ । ३ । ४ । ५ । ८ । ८ । ११ । १२ । कुजात्त्रिवेदकालगो शिवार्कगो । ३ । ४ । ६ । ८ । ११ । १२ । ऽथ बुधात्त्रिवाणकालरन्ध्रुरुद्रसंस्थितः । ३ । ५ । ६ । ८ । ११ । गुरोः शराष्टरन्ध्रदिग्भवेशग । ५ । ८ । ८ । १० । ११ । स्वतः स्वतः कुपञ्चकाष्टरन्ध्रदिक् शिवोपगः । १ । २ । ३ । ४ । ५ । ८ । ८ । १० । ११ । शनेर्गुणाब्धिपञ्चनागगो दशेशगो । ३ । ४ । ५ । ८ । ८ । १० । ११ । ऽथ लग्नतः कुपञ्चकाष्टगो शिवस्थितः" । १ । २ । ३ । ४ । ५ । ८ । ८ । ११ । शुक्ररेखाः । ५२ । "शुभः पङ्गुरकात् क्ष्मायमाब्धोधिगेनाष्टदिक्शम्भुग । १ । २ । ४ । ७ । ८ । १० । ११ । इन्दुतो रामकालेशगतः । ३ । ६ । ११ । क्ष्मासुताद्विवाणर्त्तुकाष्ठा शिवार्कोपगो । ३ । ५ । ६ । १० । ११ । १२ । ऽथ ज्ञतः कालदन्तावन्यादिस्थितो । ६ । ८ । ८ । १० । ११ । १२ । जीवतो वाणकालेशमार्त्तण्डयात । ५ । ६ । ११ । १२ । स्वतो दैत्यपूज्याद्दनेशः शिवार्कायियातः । ६ । ११ । १२ । स्वतो वीतिहोत्रेषु कालेशयात । ३ । ५ । ६ । ११ । स्वतो लग्नतः क्ष्मागुणाम्भोधिपङ्दिग्महेशस्थित." । १ । २ । ४ । ६ । १० । ११ । शनिरेखाः । ३८ ।

"राहुः शुभोऽर्काङ्गजवह्निवेदसुरन्ध्रगो। २। ३। ४। ६। ८। अथ चन्द्रात् कुरामवेदाङ्गम। १। ३। ४। ६। स्ततः कुजाद्ध्विवाणाङ्गरन्ध्रगतोऽथ ३। ५। ६। ८। बुधाच्छशिपक्षवह्निवाणरन्ध्रग। १। २। ३। ४। ५। ८। स्ततो जीवाद्ब्धवाहवेदाङ्गरन्ध्रग। ३। ४। ६। ८। स्ततः शुक्रात् पक्षवह्निवाणरन्ध्रगत २। ३। ५। ८। स्ततः सौरात् पक्षवाणत्तुंग। २। ५। ६। स्ततः स्ततः शशिवेदवाणरिपुरन्ध्रगोऽथ। १। ४। ५। ६। ८। लग्नाद्दिरन्ध्रदिग्रुद्रमूर्य्येगत."। ॥। ८। १०। ११। १२। राहुरेखाः। ३८। "मृगेन्द्रविक्रमाभिधानदग्डकेन राहोरष्टवर्गः। सूर्य्यादेकद्विचतुःपञ्चाष्टदशैकादशेषु। १। २। ४। ७। ८। १०। ११। सोमात्रिपड्दशैकादशेषु। ३। ६। १०। ११। भौमात्त्रिपञ्चपडेकादशेषु। ३। ५। ६। ११। बुधात् पडष्टनवदशैकादशेषु। ६। ८। ९। १०। ११। गुरोः पञ्चपडेकादशद्वादशेषु। ५। ६। ११। १२। शुक्रात् पडेकादशद्वादशेषु ६। ११। १२। शनेस्त्रिपञ्चाष्टदशैकादशेषु। ३। ५। ८। १०। ११। लग्नादेकत्रिचतुःपड्दशैकादशेषु"। १। ३। ४। ६। १०। ११। एवं लग्नरेखाः। ३७। "इति निगदितमिष्टं नैष्टमन्यद्विशेषादधिकफलविपाकं जन्मभातत्र दद्युः। उपचयगृहमित्रस्वोच्चगाः पुष्टमिष्टं त्वपचयगृहनीचारातिभे नैष्टसम्पत्। यावती यावती रेखा ग्रहाणामष्टवर्गके। तावतीं द्विगुणीकृत्य चाष्टाभिः परिशोधयेत्। चाष्टोपरि भवेद्रेखा चाष्टाभ्यन्तरविन्दवः। चाष्टाभिस्तु समो यत्र तत्सम परिकीर्त्तितम्। रेखाधिक्ये शुभे देया विन्दवश्चेतरत्र तु। रेखा विन्दु समानो चेत् समस्तत्र निगद्यते। रेखाधिक्ये शुभं ज्ञेयं तद्विन्दोरधिकेऽशुभम्। ग्रोरानन्दस्तथा ज्ञेयो भोगो राज्यं भवेत्तथा। क्षतिमोऽथ विपद्येव हानिर्मृत्युर्भवेत्तथा। दशादि-

रेखा ह्रासादिबिन्दोः फलान्येतान्यनुक्रमात्। रेखायां वत्सरो ज्ञेयः सार्द्धमासदिनं समे। अष्टवर्गदमायुः स्यात् दिनं चतुर्षु बिन्दुषु"॥ इत्यायुर्दायः। इत्यष्टवर्गः। नन्दी। "अष्टवर्ग-शुभैः श्रीमान् कर्म्म कुर्य्यान्नभश्चरैः। गोचरस्थैस्तदप्राप्तौ तद-प्राप्तौ च वेधगैः॥ व्रतारम्भे विवाहे च यात्रायां क्षुरकर्म्मणि। अविशुद्धाष्टवर्गस्य समस्ता निष्फलाः क्रियाः॥ सततं दिशति नराणां राशौ मध्येऽष्टवर्गफलं निखिलम्। भावफलं प्रथमार्द्धे दृष्टिफलान्यर्द्धभुक्तेषु"॥ इत्यष्टवर्गार्थकथनम्।

"लाभविक्रमरसायुतः स्थितः शोभनो निगदितो दिवाकरः। खेचरैः सुतनवान्त्यगैर्व्ययार्किभिर्यदि न विध्यते तदा। सूनजन्मरिपुलाभखस्थितचन्द्रमाः शुभफलप्रदस्तदा। स्वान्त्य-जाम्बुमृतिबन्धुधर्म्मगैर्विध्यते न विबुधैर्यदि ग्रहैः। विक्रमाय-रिपुगः कुजः शुभः स्यात्तदान्त्यसुतधर्म्मगैः खगैः। येन विद्ध इनसुतुरप्यसौ किन्तु धर्म्मदृष्टिना न विध्यते। स्वाम्बुमातृ-स्तिलाभगः शुभो मस्तदा न खलु विध्यते यदा। आत्मज-त्रिनवकाद्यनैधनप्रान्त्यगैर्विविधुभिर्नभश्चरैः। स्वाध्यायधर्म्म-तनयद्युनस्थितो नाकनायकपुरोहितः शुभः। रिपुफरम्बुखजन्म-स्थितैर्यदा विध्यते गगनचारिभिर्न हि। षड्सुताष्टमतपो-व्ययायगो ।१।२।३।४।५।८।९।१२।११। विद्ध आस्फुजिदशोभनः स्मृतः नैधनास्ततनुकर्म्मधर्म्मधीलाभवैरि-षड्कस्थखेचरैः ।८।७।१।१०।९।५।११।६।३। एवमत्र खचराव्यधान्विताः सत्फलं न हि दिशन्ति गोचरे। वामवेधविधिना त्वशोभना अप्यमी शुभफलं दिशन्त्यलम्। नो विदन्ति खचरव्यधक्रमं ये यदृच्छमविदो हि गोचरे। ते स्वपापवचनभाषिणो जना यान्ति हास्यमपकीर्त्तिलाञ्छिताः"॥ सप्तानां ग्रहाणां दक्षिणवेधवामवेधौ "सूर्य्यसन्धिगताः खेटा

राशिसन्धिगतास्तथा। एषमादिः फलं दद्युर्वक्रे च विपरीतकम्॥ लग्नेशो यदि वक्री स्यात् पुंसः कार्य्येषु वक्रता। लग्नेशेऽस्तं गते मर्त्त्यो दुःखादिव्याधिसंयुतः॥ असत्फलः सौम्यनिरीक्षितश्च शुभप्रदश्चाप्यशुभेक्षितश्च। तौ निष्फलौ "द्वावपि खेचरेन्द्रौ यः शत्रुणा स्वेन निरीक्षितश्च॥ शुभौघगेऽस्तगेऽपि वा रिपोर्गृहे स्थिते ग्रहे। वृथाफलं प्रकीर्त्तितं समस्तमेव सूरिभिः"॥ वराहस्तु "सूर्य्यास्तगद्युतिषु च दलं प्रोज्झ्य शुक्रार्कपुत्रौ"। दलं अर्द्धं फलस्येति शेषः। "लग्नराशेः शुभः सूर्य्यस्त्रिषडदशलाभगः। द्विपञ्चनवमोऽपीष्टस्तयोदयदिनात् परः॥ रविशुद्धौ ग्रहकरणं रविगुरुशुद्धौ व्रतोद्वाहौ। चोरं तारकशुद्धौ शेषं चन्द्रान्वितं कर्म॥ सदा सर्व्वेषु कार्य्येषु विततग्रहविशेषतः। सितेन्दुबुधजीवानां वाराः सर्व्वत्र शोभनाः। भानुभूसुतमन्दानां शुभकर्म्मसु केष्वपि। कुर्य्याच्छस्त्रसपोहिचामि नृपतेर्याभिषेको तथा॥ शेषा भेषजवह्निकर्म्मकरणं चारोग्यकर्म्माणि च। विद्यास्नानवरव्रतानि च्यवनं शिल्पं रणं साहसं मिथ्याकरणे दिने दिनपतेर्लग्ने स्थिते वा रवौ। रक्तक्वाथविपाशकर्म्मइतभुक् कार्य्यं विवादं रणं कुर्य्याद्वन्दविधिं खदुष्टदमनं सेतुप्रभेदं तथा। द्रुमच्छेदनभेदनानि मृगयां चौर्य्यं तथा साहसं सेनाद्यं क्षयिकर्म्मधातुकरणं भौमस्य लग्नेऽह्नि वा। स्थाप्य समाप्यं क्रतुदानकार्य्यं गृहे प्रवेशो नगरे पुरे वा। भौमोक्तकार्य्यं गजवाजिबन्धौ दिने शनिव्याप्ति शनैश्चरस्य"॥

वारफलम्। "व्रतसुनियमयात्रमङ्गलारामसेंतु भास्करादिवासरे। प्रभवति हि वारवेला न शुभाशुभकार्य्यकरणाय"॥ वारवेला। "कामद्य वेलारविनः शराशिकामागमगागाश्च यो शशेन्दु। दिने निशायामनुवेदनेत्रनगेषु रामाविधदन्तिमौ

च"॥ कालवेला। "वेदा ४ नन्नेषु ५ नेत्रा ७ मुनि ७ नयन २ रसा ६ युग्म २ षट् ६ कामबाणा ५ बाण ५ शोभाक्षि २ वेदा ४ वसु ८ मुनि ७ इत्यक् ३ पाक्षिवेद ४ दयाग्नि २ यष्ठाष्टकं दिनेशात् क्रमश इह दिने मन्विकषठेश्वरोक्तः पूर्वभागार्द्धयामः कुलिक इह परो मध्यमश्चेति कालः"॥ वार-कालकुलिकवेलाकथनम्। विशेषतः कुलिकवेलाप्रयोजनन्तु "जपित्वासितगुञ्जानां कुड्वं कुलिकोदये"। इत्यनेन नव-दुर्गामन्त्राभिचारकर्मणि सारदायामुक्तम्। तट्टीकाकारराघव-भट्टस्तु। "मन्वर्कोदिग्वसुतुवेदपक्षैरर्काम्मुहूर्त्तैः कुलिका भवन्ति। दिवा निरेकैरथ यामिनीषु ते गर्हिताः कर्मसु शोभनेषु" निरेकैः पूर्वोक्तमन्वादिमुहूर्त्तैरेकोनैरित्यर्थः। "यात्रायां मरणं काले वैधव्य पाणिपीडने। व्रते ब्रह्मवधः प्रोक्तः सर्वं कर्म ततस्त्यजेत्॥ शिशिरपूर्वमृतुत्रयमुत्तर ह्ययनमाहुरहश्च तदा-मरम्। भवति दक्षिणमन्यऋतुत्रयं निगदिता रजनी मरुताश्च सा॥ सौम्यायने कर्म शुभं विधेयं यद्गर्हितं तत् खलु दक्षिणे तु" सौम्यायनेन शुक्लः कृष्णो याम्यायनेन सम उक्तः। फलतः कर्मतोऽपि पक्षयोर्गर्गादिभिर्मुनिभिः। "नन्दा भद्रा जया-रिक्ता पूर्णा च नाम सदृशफला। न्यूनसमेष्टाः शुक्ले कृष्णे तिथय. प्रतीपास्ताः। सदैव दर्शे पितृकर्म मुक्ता नान्यद्विद-ध्यात् शुभमङ्गलानि। तिथिफलम्।

"तिथ्यन्तद्वयमेको दिनवारः स्पृशति यत्र तद्दवत्यवमदिनम्। त्रिदिनस्पृक्तिथिरयस्पर्शनाख्यः."॥ अवमत्र्यहस्पर्शौ। कौर्मे पाद्मेऽपि। "द्वौ तिथ्यन्तावेकवारे यत्र स स्याद्दिनक्षय."। वशिष्ठः। "एकस्मिन् सावने त्वह्नि तिथीनां त्रितय यदा। तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम्"॥ साहस्रिकं फलमिति माङ्गल्येतरवैदिककर्मपरम्। "अधिमासे दिनपाते

धनुषि रवौ मानुलङ्घिते मासि। चक्रिणि सुप्ते कुर्य्याच्चो माङ्गल्यं विवाहञ्च" ॥ इति भीमपराक्रमात् दिनपाते दिनक्षये। "त्र्यहस्पृशं नाम यदेतदुक्तमव प्रयत्नः क्षतिभिर्विधेयः। विवाहयात्रा शुभपुष्टिकर्म सर्वं न कार्य्यं त्रिदिनस्पृशे तु ॥ आद्यास्ततः क्रियपूर्व्वकाणामेषां चतुर्णामपि पञ्चमी स्यात्। पराः परेषां परतस्तथैषा सक्रूरराशेरशुभा तिथिः स्यात्"॥ मेषे चेत् पापग्रहस्तदा प्रतिपद्दुष्टा वृषे चेत् द्वितीया मिथुने तृतीया कर्कटे चतुर्थी चतुर्षु पञ्चमी। एवं सिंहादौ षष्ठ्यादयः।

"अश्विनी भरणी चैव कृत्तिका रोहिणी तथा। मृगशीर्षस्तथा चार्द्रा पुनर्वसुकपुष्यकौ ॥ अश्लेषा च मघा पूर्व्वफल्गुन्युत्तरफल्गुनी। हस्ता चित्रा तथा स्वाती विशाखा चानुराधिका ॥ ज्येष्ठा मूलं तथाषाढे पूर्व्वोत्तरपदादिके। श्रवणा च धनिष्ठा च शतभिषाख्यभाद्रिका। उत्तरादिभाद्रपदा रेवती भानि च क्रमात्"॥ नक्षत्रकथनम्। "अश्वियमदहनकमलजशशिशूलभृददितिजीवफणिपितरः। योऽन्यर्य्यमदिनकृत्त्वष्टृपवनशक्राग्निमित्राः। शक्रो निर्ऋतिस्तोयं विश्वविरिञ्चो हरिर्वसुवरुणः ॥ अजपादो हि अध्नः पूषा चेतीश्वरा भानाम्" ॥ विशाखायाः शक्राग्नीर्मिलितदेवतत्वम् अभिजितो विधत्वेन अष्टाविंशतिता तत्र वक्ष्यते। नक्षत्राधिपकथनम्।

"उग्रः पूर्व्वमघान्तका ध्रुवगणस्त्वीण्युत्तराणि स्वभूर्वातादित्यहरित्रयं चरगणः पुष्याश्विहस्ता लघुः। चित्रा मित्रमृगान्त्यभं मृदुगणस्तीक्ष्णो हि रुद्रेन्द्रयुक्। मिश्रोऽग्निः सविशाखभः शुभकराः सर्व्वे स्वनाम्ने गणाः." ॥ गणकथनम्। "अग्नेयवह्निमपित्र्यविशाखयुक्तं पूर्व्वात्रयं शतभिषा च नवाम्बुडूनि।

एतान्यधोमुखगणानि शिवानि नित्यं विद्यार्थभूमिखननेषु च भूषितानि" ॥ अधोमुखगणकथनम्। "रविः स्थिरः शीतकरश्चरश्च महीज उग्रः शशिजश्च मिश्रः। लघुः सुरेज्यो भृगुजो मृदुश्च शनिश्च तीक्ष्णः कथितो मुनीन्द्रैः॥ शशाङ्क-तारयोः शुद्धिर्विचार्य्या सर्वकर्मसु। ग्रहाणामपि सर्वेषां तच्छुद्धौ फलदातृता"॥ श्रीपतिसमुच्चये। "ताराचन्द्रबले प्राप्ते दोषायान्ये भवन्ति ये। ते सर्वे विलयं यान्ति सिंह दृष्ट्वा गजा इव॥ जन्मसम्पत् विपत्क्षेमः प्रत्यरिः साधको वधः। मित्रं परममित्रञ्च जन्मभाच्च पुनः पुनः॥ सर्वमङ्गलकार्य्याणि त्रिषु जन्मसु कारयेत्। विवादश्राद्धभैषज्ययात्राक्षौरादि वर्जयेत्॥ यात्रायां पथि बन्धनं क्षपिविधौ सर्वस्व नाशो भवेत्। भैषज्ये मरण तथा सुनियतं दाहो गृहारम्भणे॥ क्षौरे रोगसमागमो बहुविधः श्राद्धेऽर्थनाशस्तथा। वादे बुद्धि-विनाशनं युधि भय प्राप्नोत्ययं जन्मभे॥ पापाख्या तु त्रिविधा पञ्चचतुर्दशविंशतिस्त्रियुता। त्रिविफला हविकरी विनाश-संज्ञा क्रमात् कथिता"॥

"जन्माद्यं कर्म ततोऽपि दशमं सांघातिकं षोडशभम्। समुदयमष्टादशभ विनाशसंज्ञं त्रयोविंशम्॥ आद्यात्तु पञ्चविंशं मानसमेवं नर. षडक्षः स्यात् नवनक्षत्रो नृपतिः स्वजातिदेशाभिषिकर्क्षे."॥ ज्योतिषे तु। "पूर्वात्रयं सानल-मग्रजानां राज्ञान्तु पौष्णेन सहोत्तराणि। सपौष्णमित्र पितृ-दैवतञ्च प्रजापतेर्भञ्च कृषीवलानाम्॥ आदित्यहस्ताभिजि-दश्विभानि तान्यन्त्यजातेः प्रभविष्णुतायाम्"॥ देशः देश-नामर्चम्। नाडीनक्षत्राणि। "देहादेहार्थहानिः स्याज्ज-न्मर्च्चे उपतापिते। कर्मर्च्चे कर्मणां हानिः पीडामनसि मानसे॥ मूर्त्तिद्रविणबन्धूनां हानिः सांघातिके तथा। सतमे

सामुदयिके मित्रभृत्यार्थसंचयः ॥ वैनाशिके विनाशः स्यात् देहद्रविणसम्पदाम्" ॥ नाडीनक्षत्रफलम् । "जातिभे कुलनाशः स्यादभिषेकाभिषेकभे । देशभे देशभङ्गः स्यात् क्रूरैरेवं शुभैः शुभम् ॥ यस्मिन् राजाभिषिक्तो भवति तदाभिषेचनिकभम् । ष द ल ए कृत्तिका ची व वि नु रोहिण्यौत्यादिदेशभम् ॥ सर्वेषां पीडायां दिनमेकमुपोषितोऽनलं जुहुयात् सावित्र्या क्षीरतरोः समिद्भिरमरद्विजानुरतः" ॥

अथ ग्रहणम् । "भत्रिपादान्तरे राहोः केतोर्वा संस्थितो रविः । चतुष्पादान्तरे चन्द्रस्तदा सम्भाव्यते ग्रहः ॥ यस्मिन् ऋचे रविस्तस्माच्चतुर्दशगतः शशी । पूर्णिमा प्रतिपत्सन्धौ राहुणा ग्रस्यते शशी" ॥ तस्मात्तमारभ्य परतो वा । "कृष्णपचे तृतीयायां मासर्क्षं यदि जायते । ततस्त्रयोदशे सूर्य्ये राहुणा ग्रस्यते रविः" ॥ मासर्क्षं वैशाखज्येष्ठादौ विशाखा ज्येष्ठादि एतदपि भत्रिपादान्तरे सति राहोः पादभोगश्च मासद्वयेन । "रविभौमनवांशे च निरभ्रं ग्रासमादिशेत् । बुधसौरिनवांशे च मलिनं क्षुद्रवर्षणम् ॥ गुरोरंशकमासाद्य दृश्यते सवलाहकः । शशिशुक्रनवांशे च प्राहुट् काले महज्जलम् ॥ अन्यत्राप्यकभूतौ तौ दृश्येते छादिताम्बरौ" ॥ तौ चन्द्रार्कौ । कृत्यचिन्तामणौ वराहः "श्वेते क्षेमसुभिक्ष ब्राह्मणपडाश्च निर्दिशेद्राहौ । अग्निभयमनलवर्णे पीडा हुताशवृत्तीनाम् ॥ हरिते रोगोऽनुतापः शस्यानामीरितो ध्वंसः । कपिले शीघ्रगसत्त्वम्लेच्छध्वंसोऽथ दुर्भिक्षम् ॥ अरुणकिरणानुरूपे दुर्भिक्षं वृष्ट्यो विहगपीडा च । धूम्राभे क्षेमसुभिक्षमादिशेन्मन्दवृष्टिश्च । कापोतारुणकपिले श्यामाभे च क्षुद्भयं विनिर्दिशेत्" ॥ कापोतः शूद्राणां व्याधिकरः कृष्णवर्णश्च । "विमलकमलपीताभो भवेद्वैश्यदेयो सुभिक्षाय । सार्चिस्म-

नामकरणम्। "कुलदेवता नक्षत्राभिसम्बन्धं पिता नाम कुर्य्यादन्यो वा कुलवृद्धः" इति कल्पतरुष्टतशङ्खलिखितवचने नाभिवादनीयं नामधेयं कल्पयित्वा देवताश्रयं नक्षत्राश्रयं गोत्राश्रयमप्येक इति गोभिलसूत्रेणोपनयनकाले च नक्षत्राभि-सम्बन्धेन नामाभिधानं तत्रतत्पदचक्रानुसारात् स्वनक्षत्रपदा-नुसारात् ज्ञेयम्। पाश्चात्यानां तथैव व्यवहारः। यत्र तु न तथाकृतं तत्र नामाक्षरानुसारनक्षत्रादपि फलं ज्ञेयम्। अत्र कुलवृद्ध इति दर्शनात् संस्कारान्तरे तथैव व्यवहारः। मनुः। "स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम्। माङ्गल्यं दीर्घ-वर्णान्तमाशीर्वादाभिधानवत्"॥ गोभिलः। अयुग्माक्षरं स्त्रीणामिति। यथा यशोदा वसुदादि। नारायणपद्धतौ। "नामकरणं स्थिरलग्ने केन्द्रपञ्चनवमस्थिते सौम्ये। व्यय-षष्ठसमधिष्ठितपापे जीवशशाङ्कशिसौम्यदिनेषु"॥ प्रसादप्रास-नान्नाप्येवम्। व्यासः। "न स्नायादुत्सवेऽतीते निर्वर्त्यापि च मङ्गलम्। अनुव्रज्य सुहृदस्थून् पूजयित्वेष्टदेवताः"॥

अथ निष्क्रामणम्। विष्णुधर्मोत्तरे। "चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात्"। दीपिकायाम्। "आर्द्रा-धोमुखवर्जितानुपहते हस्तेऽश्विनी तिथौ वारे भौमशनीतरे घटतुलाकन्यामृगीन्द्रोदये। मङ्गलेऽथ चतुर्थमासि यदि वा मासि तृतीये विधावतौघे शुभदे शिशोरभिनवं निष्क्रामणं कारयेत्"। अधोमुखानि भानि च। "अग्नेयवह्निद्वयमपित्र्यविशाखयुक्तं पूर्वात्रयं शतभिषा च मघाप्युडूनि। एतान्यधोमुखगणानि शिवानि नित्यं विद्यार्थभूमिखननेषु च भूषितानि"। चतुर्थ-मासीति अर्कोदयपूर्वदिनात्। यथाह विष्णुः। "चतुर्थे-माध्यादित्यदर्शनमिति"। शौनकोऽपि। "चतुर्थे मासि सुप्रसंस्थे गृहे निष्क्रमणं शिशोः"। पारस्करः। "चतुर्थे

मासि निष्क्रमणिका सूर्य्यमुदीक्षयति तत्तनुरितोति"। मासि तृतीय इति तु छन्दोगानां गोभिलेन जननाक्षरं तृतीयशुक्लपक्षतृतीयायां चन्द्रदर्शनरूपनिष्क्रामणविधानात् यथा गोभिलः। जननाद् यस्तृतीयो ज्योत्स्नस्तस्य तृतीयायामित्यादि। ज्योत्स्नः शुक्लपक्षः। अत्रैव कृत्यचिन्तामणिः। "तस्मात् स्वस्वविधानतोऽर्कशशिनोरर्घ्यं विभं दापयेत्"। अर्घ्यमन्त्रः। "एहि सूर्य्य सहस्रांशो तेजोराशे जगत्पते। अनुकम्पय मां भक्तं गृहाणार्घ्यं दिवाकर"॥ चन्द्रार्घ्यमन्त्रः। "क्षीरोदार्णवसम्भूत अत्रिनेत्रसमुद्भव। गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितो मम"॥

अथान्नप्राशनम्। "ततोऽन्नप्राशनं षष्ठे मासि कार्य्यं यथाविधि। अष्टमे वाथ कर्त्तव्यं यद्वेष्टं मङ्गलं कुले"॥ षष्ठ इति मुख्यः कल्पः प्राशस्त्यात्। कृत्यचिन्तामणौ। "अन्नस्य प्राशनं कार्य्यं मासि षष्ठेऽष्टमे बुधैः। स्त्रीणान्तु पञ्चमे मासि सप्तमे प्रजगौ मुनिः॥ द्वादशी सप्तमी नन्दा रिक्तासु पञ्चपर्वसु। बलमायुर्यशो हन्यात् शिशूनामन्नभक्षणम्"॥ भुजबलभीमे। "षष्ठे मासि निशाकरे शुभकरे रिक्तेतरे या तिथौ सौम्यादित्यसितेन्दुजीवदिवसे पक्षे च कृष्णेतरे। प्राजेशादिति पौष्णवैष्णववसुश्वेस्त्वादि यत्कौत्तरेरान्नेयाप्यतिसितप्रभेय नितरामन्नादि भक्ष्यं शुभम्"॥ बुधैरिति प्राजेशादौ प्रत्येकं सम्बध्यते। तथात्रापि तिथ्यादिविहत्वञ्च विवर्जयेत्॥ वृषद्वन्द्वधनुर्मीनकन्यालग्नेऽन्नभक्षणम्। त्रिकोणाष्टकयुकास्य-प्रदा यदत्तया फलम्॥ दुष्ट शशधरो लग्नात् षष्ठाष्टस्थोऽन्नभक्षणे"॥ मार्कण्डेयः। "देवता पुरतस्तस्य पितुरङ्कगतस्य च। अलङ्कृतस्य दातव्यमन्नं पात्रे च काञ्चने॥ मध्वाज्यकनकोपेतं प्राशयेत् पायसं ततः। कृतप्राशनमुत्सङ्गे मातु-

र्घांशन्तु सं न्यसेत्॥ देवाग्रतोऽथ विन्यस्य शिल्पभाण्डानि सर्वशः। शास्त्राणि चैव शस्त्राणि ततः पश्येत् लक्षणम्॥ प्रथमं यत् स्पृशेद्बालः शिल्पभाण्डं स्वयं तथा। जीविका तस्य बालस्य तेनैव तु भविष्यति"॥

अथ नवान्नम्। दीपिकायाम्। "अयोदर्शौ जन्मदिनञ्च मन्दां जन्मर्क्षतारां सितमासरञ्च। त्यक्त्वा हरीज्येन्दुकरान्त्य-सेवमृदुवेषु च श्राद्धविधानसिद्धम्॥ मेषगा हि धिवान्येषु विभौमयमिवासरे। नवमाम्रमवत् कुर्य्यान्नवान्नफलभोजनम्॥ सूर्य्ये चैव विशाखगे स्मरतिथौ पापे त्रिजन्मान्विते मन्दा मन्द-महीजवाक्यदिवसे पौषे मधौ कार्त्तिके। मेषगा हि धिवेषु विष्णुशयने कृष्णे शशिन्यष्टमे श्राद्धं भोजनकं नवान्नविहितं पुत्रार्थनाशप्रदम्। ज्येष्ठाश्लेषार्द्रगे सूर्य्ये मृगनैधनिधानके। नवान्नैर्भोजनं श्राद्धं जन्मचन्द्र तिथौ न च"॥ ब्रह्मपुराणे। "प्राश्नीयाद्भक्तिसंयुक्तं नवं विप्राभिमन्त्रितम्"॥

अथ जन्मतिथिः। "जन्मर्क्षयुक्ता यदि जन्ममासे यस्य ध्रुवं जन्मतिथिर्भवेच्च। भवन्ति संवत्सरमेव तावत् नैरुज्यसम्मान-सुखानि तस्य। क्षतान्तकुजयोर्वारे यस्य जन्मतिथिर्भवेत्॥ अनृचयोगसम्प्राप्तौ विघ्नस्तस्य पदे पदे। तस्य सर्वविधिस्नानं प्रह्वविप्रसुरार्चनम्॥ सौरारयोर्दिने मुक्ता देयान्नृचे॥ काञ्च-नम्। जन्मनृचे यदि स्यातां वारौ भौमशनैश्चरौ। माघः सकलसो नाम नमो दु क्षप्रदायकः"॥

अथ चूडाकरणम्। मनुः। "चूडाकर्म्म द्विजातीनां सर्व्वेषामेव धर्म्मतः। प्रथमेऽब्दे तृतीये वा कर्त्तव्यं स्मृति-चोदनात्"॥ नात्र प्राप्तुत्वन्यायात् प्रथमाब्दस्य प्राधान्यं किन्तु तृतीयाब्दस्य। तथा च "चूडाकार्य्यं तृतीयाब्दे सर्व-गृह्यादिसम्मतः तस्मादेऽयोचहवय मुख्य इत्यवगम्यते"॥ यद्व-

लिखितौ। "तृतीयवर्षे चूड़ाकरणं पञ्चमे वा" इति। ज्योतिषे। अयुग्माब्दे चूड़ासौमशनैश्चरे। "पर्केन्दुकालशुद्धौ च जन्ममासेन्दुभेतरे। रिक्ता दर्शाष्टमौ षष्ठौ प्रतिपद्वर्जिते सिते"॥ दर्शोऽपि सामान्यतो दोषमाह। "षष्ठ्यष्टमी पञ्चदशी उभे पक्षे चतुर्दशी। अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे॥ मेषसिंह तुला कर्किवृषिकेतरलग्नके। श्रवणादित्रयस्वाती चित्रा पुष्याश्विच-न्द्रभे। आदित्यरेवतीहस्ताज्येष्ठामूले च चोड़कम्। पौष्णाश्वि-पुष्यवसुवासवसुदेवब्रह्मार्कचन्द्रवरुणादितिचित्रमेषु। वारेषु सोमबुधवाक्पतिभार्गवाणां क्षौरं करोति कुशलं खलु मानवानाम्" इति वचनात् रोहिण्यामपि चूड़ाकरणम्। अत्रापि तिथ्यादिविहस्तत्त्वं वर्जयेत्। "सूर्ये दक्षिणमार्गगामिनि हरौ सुप्ते- निरंशे रवौ क्षीणे शीतरुचौ महीजयमयोर्वारे निशा-सन्ध्ययोः। भुक्तेऽभ्यक्ततनौ निषिद्धसमयेऽलङ्कारयुक्ते शिशौ क्षौराद्रोगभयं वदन्ति यवना स्नात्वं तथान्ये जगुः"॥ राजमार्त्तण्डे। "मासं हरेत् क्षौरमिहायुषोऽर्कः शनैश्चरः पञ्च-कुजस्तथाष्टौ। आचार्य्य भृग्विन्दु बुधाः क्रमेण दद्युर्दशैकादशसप्तपञ्च"॥ जीवादिवारे क्षौरं प्रशस्तम्। भोजराजः। "उत्तरायिखिलसन्निधाने च चूड़ाकरणं जगुः शुभं यवनाः। चैत्रे मासि दिवाकरवारे वर्त्मनि सवितरिदिवाकरवारविनिर्मोकि तु"॥ गर्गः। "जन्मर्क्षे जन्ममासे च युग्ममासे च वत्सरे। न कुर्य्यात् प्रथमं क्षौरं विशेषाच्चैत्रपौषयोः"॥ ज्येष्ठपुत्रकन्ययोस्तु ज्येष्ठमासाद्यभ्यन्तरे चूड़ानिषेधो विवाहप्रकरणे उक्तः। नित्यक्षौरे तु राजमार्त्तण्डः। "न स्नानमावगसभोक्तुकभूषिता-नामभ्यक्तभुक्तरणकालनिरासनानाम्। सन्ध्या निशा-शनि-कुजार्कदिनेषु रिक्ते क्षौरं हितं प्रतिपदह्नि न चापि विद्याम्॥ प्राचीमुखः सौम्यमुखोऽपि भूत्वा कुर्य्यान्नरः क्षौरमनुत्कटस्थः।

उत्तराश्रितयाम्यरोहिणीरौद्रसर्पपितृमेषु चाश्विभे। श्मश्रु-कर्म्मसकलं विवर्जयेत् प्रेतकार्य्यमपि बुद्धिमान्नरः। प्रेतकार्य्यं पतितप्रेतसम्प्रदानकदासी घटदानविषयकम्। अन्यथा वक्ष्यमाणवचनविरोधः स्यात् "चन्द्रशुद्धिर्यदा नास्ति तारायाश्च विशेषतः। क्षौरेऽपि कर्त्तव्यं चन्द्रचन्द्रजयोर्दिने॥ मासं चौरे हन्ति गुरुः शक्रं शुक्रो धनं रविः। आयुरङ्गारको हन्ति सर्वं हन्ति शनैश्चरः"॥ श्रीपतिरत्नमालायाम्। "आज्ञया नरपतेर्द्विजन्मनां दारकर्म्ममृतसूतकेषु च। बन्धमोक्षमखदीक्षणेष्वपि क्षौरमिष्टमखिलेषु चोडुषु॥ देवकार्य्ये पितृश्राद्धे रवेरशपरिक्षये। क्षुरिकर्म्म न कुर्वीत जन्ममासे च जन्मभे"॥ वृद्धगार्ग्यः। "केशवमानसंपुटं पाटलिपुष्पं पुरोमहिषकाम्। हितमिदमखिल क्षरतां क्षौरविधौ भवति कल्याणम्"॥ अत्र क्रमो वराहपुराणे। "श्मश्रुकर्म्म कारयित्वा नखच्छेदमनन्तरम्"।

अथ कर्णवेधः। मार्कण्डेयबृहद्राजमार्त्तण्डसत्यचिन्तामणिषु। "यदापत्यद्वयं तिष्ठेत् सम्भवोऽप्यपरस्य च। षट्कर्णं तं विजानीयात् सर्व्वैतस्य वयस्य च॥ इत्याशङ्क्य द्वयोर्मध्ये शुद्धिर्यस्याश्च वत्सरे। कर्णवेधो हितस्तस्य नात्र कार्य्या विचारणा॥ षट्कर्णोत्पत्तिमाशङ्क्य भानोः शुद्धा समेऽपि च। कर्णौ वेध्यौ न दोषः स्यात् अन्यथा मरणं भवेत्"॥ राजमार्त्तण्डे "न जन्ममासे न च चैत्रपौषे न युग्मवर्षे न हरौ प्रसुप्ते। रवौ च दुष्टे न च कृष्णपक्षे न जन्मभे कर्णविधिः प्रशस्तः"॥ दीपिकायाम्। "नो जन्मेन्दुभमास सूर्य्यरविजक्ष्माजाद्यसुप्ताच्युते शस्तेऽर्के लघुयुग्मविष्णुवसुभे स्वात्युत्तरादित्यभे। सौम्येत्याय-त्रिकोणकण्टकगतैः पापैस्त्रिलाभारिगैर्जीवोऽस्ते श्रुतिवेध इज्य-श्रितभे लग्ने तु काले शुभे"॥ तत्रापि तिथ्यद्धादिविहर्च्च वर्जयेत्। गर्गः। "कर्णवेधयते कुर्य्यादुदङ्मार्गस्थिते रवौ। दक्षिणमार्गस्थिते भानौ नैव कुर्य्याद्विचक्षण"॥

अथ विद्यारम्भः। विष्णुधर्मोत्तरे। "संप्राप्ते पञ्चमे वर्षे अप्रसुप्ते जनार्दने। षष्ठीं प्रतिपदञ्चैव वर्जयित्वा तथाष्टमीम्॥ रिक्तां पञ्चदशीञ्चैव सौरिभौमदिनं तथा। एवं सुनिश्चिते काले विद्यारम्भन्तु कारयेत्॥ पूजयित्वा हरिं लक्ष्मीं देवीञ्चापि सरस्वतीम्। स्वविद्या सूत्रकारांश्च स्वाञ्च विद्यां विशेषतः"॥ नमस्ते बहुरूपाय विष्णवे परमात्मने। स्वाहेत्यनेन हरिं त्रिःपूजयेत्। "भद्रकाल्यै नमो नित्यं सरस्वत्यै नमो नमः। वेदवेदान्तवेदाङ्गविद्यास्थानेभ्य एव च" स्वाहेति ब्रह्मपरायणेन च त्रिःपूजयेत्। लिखनविधिमाह नन्दि-पुराणम्। 'शुभे नक्षत्रदिवसे शुभे वारे दिनत्रये। लेखयेत् पूज्यदेवेशान् रुद्रब्रह्मजनार्दनान्॥ पूर्वदिग्वदनो भूत्वा लिपिज्ञो लेखकोत्तमः। निरोधी स्वक्षावान्छोच समोपवासधारणे"॥ मत्स्यपुराणञ्च। "शीर्षोपेतान् सुसम्पूर्णान् समश्रेणिगतान् समान्। अक्षरान् विलिखेद् यस्तु लेखकः स वरः स्मृतः"॥ नाधीयीतेत्यनुवृत्तौ मनुः। "रुधिरे च सुते गात्रात् शस्त्रेण च परिक्षते"। रुधिरस्रवं विना शस्त्रेण क्षतमात्रेऽपि। दीपिकायाम्। "लघुचरमित्रमूलाश्वीमुखत्वष्टपौष्णश्रविष्णु च हरिबोधे शुक्रजीवार्कवारे। उदितवति च जीवे केन्द्रकोणेषु सौम्यैरपठमदिनवर्णं पाठयेत् पञ्चमेऽब्दे"॥ मदनपारिजाते। "विद्यारम्भे गुरुः श्रेष्ठो मध्यमौ भृगुभास्करौ। मरणं शनि-भौमाभ्यामविद्या बुधसोमयोः"॥ "विद्यारम्भः सुरगुरुसितश्रे-ष्ठभोष्टार्थदायी कर्त्तुश्चायुश्चिरमपि करोत्यर्यमान् मध्यमोऽत्र। नीहारांशौ भवति जड़ता पञ्चता भूमिपुत्रे छायासूनावपि च मुनयः कीर्त्तयन्त्येव माद्याः॥ रवेर्गुरोर्भृगोर्लग्ने तत् स्वेऽर्के-ऽप्यैन्दुवहितः। गुर्वर्केन्दुबुधाढ्ये च विद्यारम्भः प्रशस्यते"॥ बृहस्पतिः। "प्राङ्मुखो गुरुरासीनो वरुणाभिमुखं शिशुम्।

अध्यापयेच्च प्रथमं द्विजाग्र्यैरभिः प्रपूजितम्॥ कूर्मपुराणम्। "स्वाध्यायस्य त्रयो भेदा वाचिकोपांशुमानसाः"। शिवधर्मे। "संस्कृतैः प्राकृतैर्वाक्यैः शिष्यमनुरूपतः। देशभाषाद्युपायैश्च बोधयेत् स गुरुः स्मृतः"॥ आदिः ग्रन्थकरणादिः नन्दिपुराणम्। "प्रशस्तशब्दसंयोगे कुर्य्याद्यतिविरामणम्"। विरामणं तद्दिनपाठसमाप्तिम्। "समाप्तौ वाचकाभीष्टं कुर्य्यादेव विचक्षणः। सुश्रुतं सुव्रतं भूयादस्तु व्याख्या तु नित्यदा॥ लोकः प्रवर्त्ततां धर्मे राजा चास्तु सदा जयी। धर्मवान् धनसम्पन्नो गुरुश्चास्तु निरामयः॥ इति प्रोच्य यथायातं गन्तव्यञ्च विभावितैः। शिष्टैः परस्परं शास्त्रं विमृश्यैव विचक्षणैः॥ कथावस्तुप्रसङ्गेन नानाव्याख्यानसम्भवैः। युक्तिभिश्च परिहार्य्यां विज्ञेयापि स्वयं क्षतैः॥ एवं दिने दिने व्याख्यां शृणुयान्नियतो नरः"॥ विष्णुपुराणम्। "पुत्रैरध्यापिता ये च ते पतन्ति सभोजने"। सूत उवाच। "प्रागल्भ्यहीनस्य नरस्य विद्या शस्त्रं यथा कापुरुषस्य हस्ते। न तुष्टिमुत्पादयते शरीरे अन्धस्य दारा इव दर्शनीयाः"॥ लिङ्गपुराणम्। "यो गुरुं पूजयेन्नित्यं तस्य विद्या प्रसीदति। तत्प्रसादेन यस्मात् स प्राप्नुते सर्वसम्पदः"॥ दुर्वासाः। "सन्ध्यायां गर्जिते मेघे शास्त्रचिन्तां करोति यः। चत्वारि तस्य नश्यन्ति आयुर्विद्यायशो बलम्"॥ अधीतस्यार्थिने दानमप्यावश्यकम्। तथा च श्रुतिः। "योऽधीत्यार्थिभ्यो विद्यां न प्रयच्छेत् स कार्य्यदः स्यात् श्रेयसो द्वारमाक्रुध्यात्"। इति। तद्दानञ्च। अध्यापनेन व्याख्यया विनियोगेन च मन्त्रनीत्यतोऽधीतद्विर्निर्वेद्याः क्रियते। तथा च विष्णुपुराणम्। "प्रातिमासुपकाराय यदेतेष परत्र च। कर्मणा मनसा वाचा सदैव मतिमान् भवेत्"॥ हृदन्तिरपि। "यथाशक्तिमिरोपैतान्

सन्देहपटलान्वितान् । निरामयान् यः कुरुते शास्त्राञ्जनशलाकया ॥ इह कीर्त्तिं राजपूजां लभते सद्गतिञ्च सः । पारमार्थिकेऽपि समये भ्रान्तिः संजायते यतः ॥ धावाक्षराणि स्पष्टानि पत्रारूढ़ान्यतः पुरा । उपदेष्टानुमन्ता च लोके तुल्यफलौ स्मृतौ" ॥ एवञ्च । एकलव्येनानुपदेष्टापि द्रोणाचार्य्यो गुरुः कृतः । अतो ग्रन्थकर्त्तुः सुतरां गुरुत्वम् । यथा महाभारते । "शरव्यमनुसंप्राप्य कृत्वा द्रोणं महीमयम् । तस्मिन्नाचार्य्यवृत्तिञ्च परमामास्थितस्तदा ॥ इष्वस्त्रे योगमातस्थे परं नियममास्थितः" ॥ शङ्खलिखितौ । "न वेदमनधीत्यान्यां विद्यामधीयीतान्यत्र वेदाङ्गस्मृतिभ्यः" ॥ अङ्गानि च "शिक्षाकल्पौ व्याकरणं छन्दो ज्योतिषमेव च । निरुक्तञ्चेत्यङ्गानि वेदानां गदितानि षट्" ॥ स्मृतिस्तु धर्मसंहितेत्यमरः । शिष्यस्य गुरुषु ऋणित्वमाह लघुहारीतः । "एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् । पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वा सोऽनृणी भवेत्" ॥ नन्दिपुराणे । "यस्तु लब्ध्वान्यतः शास्त्रं संस्कारं प्राप्य वै दृढम् । अन्यस्य जनयेत् कीर्त्तिं गुरोः स ब्रह्महा भवेत् ॥ विस्मरेच्च तथा मोहात् योऽपि शास्त्रमनुत्तमम् । स याति नरकं घोरमयं भीमदर्शनम्" ॥ अतएव गृहस्थादीनामपि पुनरध्ययनमाह आपस्तम्बः "यया विद्यया न विरोचेत पुनराचार्य्यमुपेत्य साधयेदिति" ॥ विष्णुः । "यश्च विद्यामासाद्य तया जीवेत् न च सा तस्य परलोकफलप्रदा भवति यश्च विद्यया परेषां यशो हन्तीति" । देवलः । "इष्टं दत्तमधीतं वा विनश्यत्यनुकीर्त्तनात् । श्लाघानुशोचनाभ्याञ्च भग्नतेजो विपद्यते ॥ तस्मादात्मकृतं पुण्यं वृथा न परिकीर्त्तयेत्" ॥ अनुकीर्त्तनं कथनम् । श्लाघा प्रशंसा अनुशोचनं धनव्ययेन पश्चात्तापः ॥ भग्नतेजाः फलजनकशक्तिहीनं वृथा रथादि

प्रयोजनं विना। वैष्णवास्तु भविष्यपुराणम्। "उपाध्यायस्य यो वृत्तिं दत्त्वाध्यापयति द्विजान्। किन्न दत्तं भवेत्तेन धर्मकामार्थमिच्छता" ॥

अथोपनयनम्। उपनयनकालश्च। "गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनं राज्ञामेकादशे सैके विशामेके यथा कुलम्। ब्रह्मवर्चसकामस्य कार्य्यं विप्रस्य पञ्चमे"॥ सैके द्वादशे। तन्नाशक्तौ प्रायश्चित्तं कृत्वा तदुत्तरे कार्य्यम्। "गृह्योक्तकर्म्मणा येन समीपं नीयते गुरोः। बालो वेदाय तद्योगं बालस्योपनयं विदुः॥ रक्तक्षये तथा ग्रस्तसूते पाठनिषेधनात्। उपनयनं तत्र स्यादिति मन्वादिसम्मतम्" ॥ कृत्यचिन्तामणौ। "जन्मोदये जन्मसु तारकासु मासेऽथवा जन्मनि जन्मभे वा। व्रतेन विप्रो न बहुश्रुतोऽपि विद्याविधेयैः प्रथितः पृथिव्याम्॥ अस्तं गते दैत्यगुरौ गुरौ वा खण्डेऽपि वा पापयुतेऽप्यनुक्ते। व्रतोपनीतो दिवसे प्रणाशं प्रयाति देवैरपि रक्षितो यः"॥ उदये लग्ने व्रतेन उपनयनेन। भुजबलभीमकृत्यचिन्तामण्योः "स्वातीमृगश्रवणधनाश्विमित्रकरभे पौष्णेज्यचित्राहरिश्विन्दो तोयपतौ भगे दितिसुते भाद्रद्वये सागरे। केन्द्रस्थे भृगुजेऽङ्गिरः प्रविसृते चन्द्रे च तारे शुभे कर्त्तव्यं व्रतकर्म्मसङ्गमतिथौ वाराः सितार्केज्यज्ञाः" ॥ तोयपतिः शतभिषा अदितिसुत उत्तरफल्गुनी सागर पूर्वाषाढा दीपिकायाम्। "जीवार्केन्दुबुधैर्घ्यरिमयन चतुर्भास्करे चोत्तरस्थे स्वाध्याये वेदवर्णाधिप दृढ शुभदे चोदिभे नादितो च। शुक्रार्केज्यचन्द्रलग्ने रविमदनतिथिं प्रोज्झ्य षष्ठाष्टमेन्दुं नो जीवास्तातिचारेऽर्कमितगुरुदिने कालगडो व्रतं स्यात्" ॥ रविमदनतिथिं सप्तमीं त्रयोदशीम्। कृत्यचिन्तामणौ। "माघे द्रविणयोनाढ्यः फाल्गुने च दृढव्रतः। चैत्रे भवति मेधावी वैशाखे कोविदो भवेत्॥ ज्यैष्ठे

गच्छतीतित्र आषाढे क्रतुभाजनः। शेषेष्वन्येषु राविः स्यान्निषिद्धं निशि च व्रतम्" ॥ राजमार्त्तण्डे। "पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति"। हृद्दगर्गः। "स्मृतिपूक्ता-ननध्यायान् सप्तमीं च त्रयोदशीं पञ्चयोर्माघमासस्य द्वितीयाम्" ॥ परिवर्जयेत् चैत्रशुक्लतृतीया आषाढ़शुक्लदशमी मन्वन्तरादित्वेन निषिद्धा वैशाखशुक्लतृतीया युगादित्वेन निषिद्धेति। षष्ठ्यामश्चिरभार्य्यो रिक्तासु बहुदोषभाक्। शुक्लपक्ष एव विहितः प्राशुक्लाश्वलायनवचनात्। सामगानां कुजवारेऽप्युपनयन न्योपत्तिरसमाबाक्तत्यचिस्रासगणिष्टत वाक्य-वचनात् यथा। "शाखाधिपे बलिनि केन्द्रगतेऽथवास्मिं वारेऽस्य चोपनयनं कथितं द्विजानाम्। नीचस्थितेऽरिगृहग-गेऽथ पराजिते वा जीवे भृगावुपनयनः स्मृतिकर्मही नः" ॥ अस्य शाखाधिपस्य दीपिकायाम्। "ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपः सितः। सामवेदाधिपो भौमः शशिजोऽथर्ववेद-राट्"। वेदाधिपकथनम्। "ब्राह्मणे शुक्रवागीशौ चत्रिये भौमभास्करौ। चन्द्रो वैश्ये बुधः शूद्रे पतिर्मन्दोऽन्त्यजे जने" ॥ वर्णाधिपकथनम्। पराशरवचनं वक्ष्ये याज्ञायाम्। अत्रापि विवाहवद्दशयोगभङ्गवर्जनम्। विष्णुधर्मोत्तरे। "षोडशाब्दो हि विप्रस्य राजन्यस्य द्विविंशतिः। विंशतिः स चतुर्थी च वैश्यस्य परिकीर्त्तिता। सावित्री नातिवर्त्तेत अत ऊर्द्ध्वं निव-र्त्तते" ॥ अत्र षोडशवर्षस्य उपनयनाङ्गता प्रतीयते। "पतिता यस्य सावित्री दशवर्षाणि पञ्च च। ब्राह्मणस्य विशेषेण तथा राजन्य वैश्ययोः ॥ प्रायश्चित्तं भवेदेषां प्रोवाच वदतां वरः"। इति यमवचने तदनङ्गता प्रतीयते अनयोर्गर्भजन्मप्रभृतिगण-नाभ्यामविरुद्धार्थता तथा च माण्डव्यः। व्रतबन्धविवाहे च वत्सरपरिकल्पनमाहुराचार्य्याः। आधानपूर्वकमेके प्रसूति-

पूर्वं सदान्धे तु। यत्तु द्विजानुपक्रम्य पैठीनसिवचनं द्वादश-षोडश विंशतिर्षेदतीता-यवकृष्टकाला भवन्ति इति द्वादश-वर्षाद्युपरि ब्राह्मणादीनां महाव्याहृति होमप्रायश्चित्तार्थम्। षोड़शोपरि तु व्रात्यहोमादि गुरुप्रायश्चित्तार्थमिति द्वत्युप-नयनम्।

अथ समावर्त्तनम्। "भौमभानुजयोर्वारे नक्षत्रे च व्रतो-दिते। ताराचन्द्र विशुद्धौ च समावर्त्तनमिष्यते" इति समा-वर्त्तनम् अथाग्निग्रहणम्। "वर्ज्जपर्व्वं कुजगुरुन्नदिनेशवारे माघादि षट्सु च मृदुध्रुववह्निमेषु। कुम्भालमीनमकविलग्न-मशुद्धकालं लग्नस्थशीतगुसितौ च विहाय कुर्य्यात्"॥ अग्नि-ग्रहणशुद्धिः। अथ सन्न्यासग्रहणम्। जीवार्कैन्दुशुद्धौ ध्रुव-मृदुभगणे चोत्तरस्थे दिनेशे प्रव्रज्येशे सुवीर्य्ये स्थिरभवन-विलग्नस्थितेऽर्क्कवारे। प्रव्रज्याख्येषु योगेष्वशुभगगनगे-र्वीर्य्यहीनैः सवीर्य्ये जीवे धर्मेऽम्बरे वा स्थिरभवनगरांशो-दये मोचदीक्षा"। इति सन्न्यासग्रहणम्। "शुभपक्षा-र्कवारेषु मृदुक्षिप्रध्रुवेषु च। शुभराशिविलग्नेषु शुभं शास्त्रि-कपौष्टिकम्"॥ शान्तिकादिशुद्धिः। शास्त्रग्रहणं रत्नमा-लायाम्। "शीतांशौ बुधराशिस्थे शुभेषूदयवर्त्तिषु। शास्त्रस्य ग्रहणं कार्य्यं हित्वा पापग्रहोदयम्"॥ राजमार्त्तण्डे। "वसु-पुनर्वसुपूर्व्वभुजङ्गमैः करमित्राकरग्रहरदैवतैश्च सह वाक्पतिभिः सह चित्रायां गुणगणार्जनमेभिरभीप्सितम्"। गुणार्जन-विधिः।

"ग्रामाधरं रवेर्मित्रं कार्षणं फलदायितम्। शेषाद्गो ग्रामराशिः स्यात् शुभाशुभकरं नृणाम्॥ दीर्घप्रस्तारहस्ताद्यं त्रिगुणं वसुभिर्हरेत्। तच्छेषाद्देन बोद्धव्या वास्तुजातिविच-क्षणैः॥ एकाह्ने वर्त्तमाने तु विप्रजातिर्लभेत् ध्रुवम्। ब्राह्मणः

क्षत्रियो वैश्यः शूद्रश्च नीचसंज्ञकः ॥ यवनो नर्त्तको हाडी भवन्त्येते यथाक्रमम् । धननाशकरो विप्रः क्षत्रियो सुखदायकः ॥ धनदश्च भवेद्वैश्यः शूद्रः पीडाकरः स्मृतः । नीचः सम्मानदाता च यवनो धनदायकः । नित्यानन्दकरो नर्त्तो हाडी च सर्वलक्षणः" ॥

अथ गृहादि । "सुनिश्चितां मन्दिरभूमिमादौ निखाय तोयावधि शल्यसिताम् । कुर्य्यादिशल्यामथवा नृमात्रं खात्वा यथा प्रश्नविधानविधिज्ञः ॥ दूर्वां प्रवालाक्षतपुष्पाढ्यैः शुचिः शुचिं दैवविदं समेत्य । पृच्छेद्विनीतो मधुरस्वरेण प्रश्नस्य तत्त्वं भवने तदीयः ॥ ततः प्रश्नादिमो वर्णः शल्यार्थी वक्ततोऽथवा । अमात् पुष्पफलादेव फलानां ब्राह्मणादितः ॥ प्रणवो धरणीधारिणी करौ च तदनन्तरम् । न भूत्यै नम इत्येष मन्त्रो वह्निप्रियात्मकः" ॥ वह्निप्रिया स्वाहा । "मन्त्रेणानेन काठिनीमभिमन्त्र्य विभाजयेत् । अथवा सदन्तरेशं तथा पञ्चाङ्गिलेख्येत् ॥ अकचटतपयाः शषहा नव चैव प्रश्नाक्षराणि जायन्ते । प्रागादिकोष्ठे नवके वर्णास्ते शल्यमाख्यान्ति ॥ प्रश्ने अकारः परतो नरास्थि ब्रवीति शल्यं मरणप्रदायि । कोणोऽमदण्डोरगर्हे तु मृत्युप्रद ककारः खरशल्यमग्नौ ॥ याम्यां चकारः प्रवगास्थिमेस्सप्रमोर्विनाशं प्रकरोति शल्यम् । रक्षोदिशि स्थास्थिटवर्गस्थितानां मध्यमार्य वक्ति सुनिश्चित तः । पः पश्चिमदिश्यस्थिशिशोर्ब्रवीति मृत्युं प्रवासादृशमेव शल्यम् ॥ वायव्यकोणे नरकपमस्थिदारिद्र्यमित्रचयकृद्विधत्ते । धनपदिशि शकारः प्राह विप्रास्थिवित्तचयकृदथ षकारो वक्ति वक्षास्थिगर्भो ॥ तदिह कुलविनाशं गोधनानाश्च हानिं वितरति गृहनाथस्यापि गुप्तस्य देवैः । यो मध्यभागे भवति कपालं कालायसं चाह छुलदयाय ॥ यद्यादपाशयान्यधुना प्रसाद्य सर्वत्र तथ्यं कथयामि

शल्ये। इन्द्रचो जलेशाने शल्य सार्द्धकरे कटौ। वज्रान्त-ककुवेरेषु पुरुषे मध्यवातयोः" ॥ इति शल्योद्धारः।

देवीपुराणम्। "पुरुषाधः स्थितं शल्यं न गृहे दोषदं भवेत्। प्रासादे दोषदं शल्य भवेत् यावज्जलान्तकम् ॥ गृहारम्भेऽतिकण्डूतिः स्वाम्यङ्गे यदि जायते। शल्यं त्वपनयेत्तत्र प्रासादे भवनेऽपि वा" ॥ वाटीव्यवस्था हस्तोऽप्यत्र कफोन्युपक्रममध्यमाङ्गुल्यपर्यन्तः। मध्यमाङ्गुलीकुर्परयोर्मध्ये प्रामाणिकः कर इत्यभियुक्तव्यवहारादिति कल्पतरुरत्नाकरौ। भीमपराक्रमे भोजराजः "स्वामिहस्तप्रमाणेन धर्मपत्नीकरेण वा। मापयेद्धर्ममाचम्य गृहकर्मणि कोविदः ॥ रूपाष्टके ८१ विंशिहतौ भवनस्य मध्यः कर्त्तुः स्वहस्तमित युग्मशरैकनिघ्नं १५२। एकोनतं रसनिशाकरयुग्मभक्तशेषं ततो भवति पिण्डपदं गृहस्य। गृहभूमिसमाहृतपिण्डपदं वसुलोचनरश्मिगजैर्गुणितम्। रविभूधरविंशत्योगहृतं भवनायव्ययस्थिति ऋचपदम्" ॥ रूपाष्टकैकाशीत्या विंशिनतः पूरितः। भवनस्य मध्यो दीर्घप्रस्तारमिलितहस्तः स्वहस्तं तत्संख्यात युग्मशरैकनिघ्नं द्विपञ्चाशदुत्तरशतपूरितम् एकोनतं पूर्वाङ्केन मिलितं रसनिशाकरयुग्म २१६। भक्तशेषं षोडशाधिकद्विशतहृतावशिष्टं संख्यात पिण्डपदसंज्ञं गृहस्य भवति तद्गृहभूमिसमाहृतपिण्डपदं वसुलोचनरश्मिगजैः षड्द्विसप्ताष्टभिर्यथाक्रमं गुणितं पूरितं यथाक्रमं रविभूधरविंशद्योगहृतं द्वादशसप्तत्रिंशत्सप्तविंशतिभिर्हृतं गृहस्य यथाक्रमम् आयव्ययस्थिति ऋचपद भवतीत्यर्थः। "रुद्रहस्तमिते मध्ये भरण्या योगतो यथा। आयादयो भवन्त्येव वसुषट्तिथियुग्मिता." ॥ ८। १। १५। २। अत्र यद्यत् दीयते पश्चात्तदेवायातीति। यत्र तु शेषो नास्ति तत्र द्वारकाद्यः शेषः "शेषाङ्केन फले योध्ये

शेषाभावे तु हारकात् । भद्रादेश फलं बोध्यमिति तत्त्वविदां मतम्" ॥ इत्युक्तत्वात् । "व्ययाधिकं न कर्त्तव्यं गृहमायाधिकं शुभम् । अष्टाविंशप्रेतभागा नरभागाश्च विंशतिः । भागा द्वादश गन्धर्वाश्चत्वारो देवतांशकाः । प्रेतभागं परित्यज्य नरभागे गृहं शुभम्" ॥ सारसंग्रहे । "न कोणेषु गृहं कुर्य्यात् नाप्यन्तेनापि मध्यतः । कोणे तु धनहानिः स्यादन्ते रिपुभयं भवेत् ॥ मध्ये च सर्वनाशः स्यात्तस्मादेतद्विवर्जयेत् । पूर्वप्लवो वृद्धिकरो धनदश्चोत्तरप्लवः ॥ दक्षिणप्लवतो मृत्युः धनहा पश्चिमप्लवः" ॥ वास्तुनः प्रागादिनीचत्वफलम् । "प्रागादिस्थे सलिले सुतहानिः शिखिभयं रिपुभयञ्च । स्त्रीकलहः स्त्रीदोष्यं नैस्वं वित्तात्मजविवृद्धी च ॥ भवनस्य वटः पूर्वे जातः स्यात् सर्वकामिकः । उडुम्बरस्तथा याम्ये वारुणे पिप्पलः शुभः ॥ प्लक्षश्चोत्तरतो धन्यो विपरीतो विपर्य्यये । जम्बीरपूगपनसाम्रककेतकीभिर्जातीसरोजतगरपनसमल्लिकाभिः ॥ यन्नारिकेलकदलीदलपाटलाभिर्युक्तं तदात्मपदं श्रियमातनोति । शोभना दाडिमाशोकपुन्नागबिल्वकेशराः ॥ रक्तपुष्पाश्च प्रायः चौरिणां च पयोऽर्थम् । कण्टकवरिमयं कुर्य्यात् गृहभेदश्च शास्त्रवित् ॥ कृत्तिकाद्यास्तु पूर्वादौ सप्तसप्तोदिताः क्रमात् । यद्दिश्यं यस्य नक्षत्रं तत्र तस्य शुभं गृहम्" ॥ स्वनक्षत्रेण गृहदिङ्निर्णयः । "वास्तु प्रमाणेन तु गात्रकेण वामेन शेते खलु नित्यकालम् । त्रिभिस्तु मासैः परिहृत्य भूमौ तं वास्तुनागं प्रवदन्ति सिद्धाः ॥ भद्रादिके वासवदिक्शिराः स्यात् मार्गादिकेषु त्रिषु याम्यमूर्द्धा । प्रत्यक्शिराः स्यात् खलु फाल्गुनादौ ज्यैष्ठादिकौवेरशिराः सनागः । मूर्द्धि खाते भवेन्मृत्युः पृष्ठे स्यात् पुत्रभार्य्ययोः । जघनेऽर्थभयं विद्यात् सर्वसम्पत्तथोदरे । एवं नागोऽडुसंज्ञो हि चेहाग्निपश्चिमे

त्रिशालं पूर्वतो हीनं कार्य्यं वा सौम्यवर्जितम् ॥ केचिद्दक्षिणभागे तु वदन्त्येकं गृहं बुधाः। ऐशान्यां देवशाला स्यात् आग्नेय्याञ्च महानसम् ॥ आयुधकारन्तु नैर्ऋत्यां वायव्यां कोपमन्दिरम्" ॥ मत्स्यपुराणे। "चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः। वैशाखे धनरत्नानि ज्यैष्ठे मृत्युस्तथैव च ॥ आषाढ़े धनरत्नानि पशुवर्गमवाप्नुयात्। श्रावणे काञ्चनं पुत्रान् हानिं भाद्रपदे तथा ॥ पत्नीनाशं इषे मासि कार्त्तिके धनधान्यभाक्। मार्गशीर्षे तथा भक्तं पौषे तस्करतो भयम् ॥ माघे चाग्निभयं विद्यात् फाल्गुने काञ्चनं सुतान्। शुक्लपक्षे भवेत् सौख्यं कृष्णे तस्करतो भयम्" ॥ विशेषयति भोजः। "कर्किकुम्भहरिनक्रगतेऽर्के पूर्वपश्चिममुखानि गृहाणि। तौलिमेषवृषवृश्चिकजाते दक्षिणोत्तरमुखानि कुर्य्यात् ॥ अन्यथा यदि करोति दुर्मतिर्व्याधिशोकधनहानिमश्नुते। मीनचापमिथुनाङ्गनागते कारयेन्न गृहमेव भास्करे ॥ न प्रधानगृहारम्भं कुर्य्यात् पौषे नृपार्थपि। यदि कुर्य्यात् सोऽचिरेण महतीमापदं व्रजेत्" ॥ महाभारते। "निषिद्धेऽपि हि काले तु स्वानुकूले शुभे दिने। तृणवस्त्रगृहारम्भे मासदोषो न विद्यते ॥ छेदनं संग्रहश्चैव काष्ठादीनां न कारयेत्। श्रवणादौ बुधः षट्के न गच्छेद्दक्षिणां दिशम् ॥ अग्निपीडा भयं शोको राजपीडा धनक्षयः। संग्रहे तृणकाष्ठानां कृते वस्वादिपञ्चके ॥ क्षीरिवृक्षोद्भवं दारु गृहेषु न निवेशयेत्। कृताधिवासं विहगैरनिलानलपीडितम् ॥ गजैर्विभग्नञ्च तथा विद्युन्निर्घातपीडितम्। चैत्यदेवालयोत्पन्नं वज्रभग्नं श्मशानजम् ॥ देवाद्यधिष्ठितं दारु नीपनिम्बविभीतकान्। कण्टकिनोऽसारतरून् वर्जयेत् गृहकर्मणि ॥ पटाश्वत्थौ च निर्गुण्डी कोविदारविभीतकौ। प्लक्ष शाल्मलीदेव पलाशञ्च विवर्जयेत् ॥ विस्तारात् द्विगुणोच्छ्रायं द्वारं कुर्य्यात्-

त्तथा गृहम्" ॥ गृहारम्भस्तु श्रवणादावप्याह राजमार्त्तण्डः । "आदित्येन्ध्यभरोहिणी-मृगशिरश्चित्राधनिष्ठोत्तरापौष्णीविष्णु-शतानुराधपवनैः शुभैः सुतारान्वितैः । सौम्यानां दिवसेऽथ पापरहिते योगे विरिक्ते तिथौ विष्टित्यक्तदिने वदन्ति मुनयो वेश्मादिकार्य्यं शुभम्" । मात्स्ये । "चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम् । स्तम्भोच्छ्रायादिकर्त्तव्यमन्यत्र परिवर्जयेत् ॥ अश्विनीरोहिणीमूलमुत्तरत्रयमैन्दवम् । स्वातीहस्तानुराधा च गृहारम्भे प्रशस्यते ॥ वज्रव्याघातशूले च व्यतीपातेऽतिगण्डके । विष्कुम्भगण्डपरिघवर्ज्जं योगेषु कारयेत् ॥ आदित्यभौमवर्ज्यास्तु सर्वे वाराः शुभावहाः । प्रासादेऽप्येवमेव स्यात् कूपवापीषु चैव हि" ॥ कल्पतरौ देवीपुराणम् । "यस्य देवस्य यः कालः प्रतिष्ठाध्वजरोपणे । गत्वा पूर्णिमान्यासे शुभदस्तस्य पूजितः" ॥ यस्य देवस्य प्रतिष्ठाध्वजरोपणे यः कालः शुभदस्तस्य गत्वापूर्णिमान्यासे स कालः पूजित इत्यर्थः । मात्स्ये । "चैत्रेऽथ फाल्गुने वापि ज्यैष्ठे वा माधवेऽपि वा । माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत्" ॥ प्रतिष्ठासमुच्चये ज्यैष्ठाषाढकयोर्वापि इत्युक्तेराषाढे दक्षिणायनेऽपि दुर्गाप्रतिष्ठामाह देवीपुराणम् । "महिषासुरहन्त्र्याश्च प्रतिष्ठा दक्षिणायने" । यत्तु तत्त्वचिन्तामणौ । "गृहेषु यो विधिः प्रोक्तो विनिवेशप्रवेशयोः । स एव विदुषा कार्य्यो देवतायतनेष्वपि" ॥ एतत्तु मासव्यतिरिक्तशुभचन्द्रादिविषयम् अन्यथा प्रागुक्तविरोधापत्तेः । ज्योतिषे । "ॐ विशाखामदितिञ्च शक्रं भुजङ्गमग्निञ्च विहाय गेहम् । याम्य लग्नस्थिरमन्दिरेषु कुर्य्याच्छुभैर्युक्तनिरीक्षितेषु ॥ नवग्रहा भवेयुश्च यदि केन्द्रत्रिकोणगाः । दोषस्तदा क्षयं याति तमः सूर्योदये यथा" ॥ राजमार्त्तण्डे । "पूर्णिमातोऽष्टमीं यावत् पूर्वास्यं

वर्जयेद् गृहम्। उत्तरास्यं न कुर्वीत नवम्यादिचतुर्दशीम्॥ अमावास्याष्टमीमध्ये पश्चिमास्यं विवर्जयेत्। नवमीतश्च याम्यास्यं यावच्छुक्लचतुर्दशीम्"॥ दीपिकायाम्। "गणेशं गन्धपुष्पाद्यैर्लोकपालानथ ग्रहान्। पूजयेत् क्षेत्रपालांश्च क्रूरभूतांश्च शास्त्रतः। ब्रह्माणं वास्तुपुरुषं तद्देहस्थाश्च देवताः"॥ ताश्च शिखिप्रभृतयो यथा। "शिखि चैवाथ पर्जन्यो जयन्तः कुलिशायुधः। सूर्यः सत्यो भृगुश्चैव आकाशो वायुरेव च॥ पूषा च वितथश्चैव गृहक्षतयमावुभौ। गन्धर्वो भृङ्गराजश्च मृगः पितृगणस्तथा॥ दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः। असुरः शेषपापौ च रोगो हि मुख्य एव च॥ भल्लाटः सोमसर्पौ च अदितिश्च दितिस्तथा। आपश्चैवाथ सावित्री जयो रुद्रस्तथैव च॥ अर्यमा सविता चैव विवस्वान् विबुधाधिपः। मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात्॥ आपवत्सस्तथा ब्रह्मा वास्तुदेहगतास्त्विमे। चरकी च विदारी च पूतना पापराक्षसी॥ स्कन्दार्यमा जम्भकाश्च पिलिपिच्छस्तथाष्टमः। एतान् मत्स्यपुराणोक्तान् गृहारम्भे प्रपूजयेत्"॥ महाकपिलपञ्चरात्रे "जलाधारगृहाद्यश्च यजेद्वास्तु विशेषतः। ब्रह्माद्यदितिपर्यन्ताः पञ्चाशत्त्रययुताः॥ सर्वेषां किल वास्तूनां नायकाः परिकीर्त्तिताः। अनभ्यर्च्य हितान् सर्वान् प्रासादादीन् कारयेत्॥ अनिष्पत्तिर्विनाशः स्यादुभयोर्धर्मधर्मिणोः"॥ तत्तद्देवताभेदेन बलिमन्त्रोभयविशेषानुक्ता। "स्वर्गपातालमर्त्येषु ये देवा वास्तुसम्भवाः। गृह्णन्त्विमं बलिं दत्तं तुष्टायान्तु समाश्रयम्॥ मातरो भूतवेतालो ये चान्ये बलिकाङ्क्षिणः। विष्णोः पारिषदा ये च तेऽपि गृह्णन्त्विमं बलिम्॥ पितृभ्यः क्षेत्रपालेभ्यो बलिं दत्त्वा यथाक्रमतः। अभावादुक्तमार्गस्य कुशपुष्पादिभिर्यजेत्॥ आकुञ्चितकरं

वास्तुमुत्तानमसुराकृतिम्। अर्चेत् पूजासु कुद्यादिनिवेशे त्वधराननम्" ॥ देवीपुराणे। "मध्यभागे ततः कुर्य्यात् वास्तुदेवस्य पूजनम्। त्रियश्च पूजनं कुर्य्याद्वास्तुदेवगणस्य च। गन्धार्घ्यपुष्पनैवेद्यधूपाद्यैः सुरसत्तम। ततः सम्पूजयेत्तस्मिन् सर्वलोकधरां महीम् ॥ सुरूपां प्रमदारूपां दिव्याभरणभूषिताम्। ध्यात्वा तामर्चयेद्देवीं परितुष्टां स्मिताननाम् ॥ ततः प्रणम्य विज्ञाप्य तन्मयत्वेन चिन्तयेत्" ॥ तथा। "एवं प्रपूजिता देवाः शान्तिपुष्टिप्रदा नृणाम्। अपूजिता विनिघ्नन्ति गृहारम्भेषु कारकम् ॥ गृहादेः शिल्परूपत्वात् विश्वकर्म्मापि पूज्यते। शिल्पाचार्य्याय देवाय नमस्ते विश्वकर्म्मणे। स्वाहा ब्रह्मपुराणीयमन्त्रेणेति मतं मम" ॥ ज्योतिषे। "तत्रस्नायतमावगर्त्तमतुलं कर्त्तुंविशुद्धे दिने खात्वा शाद्वलगोमयैः शुचितरं कृत्वास्वपूर्णं सुरान्। संपूज्यामलपुष्पकैर्जलघटं कृत्वान्यशाखायुत दद्यादर्घ्यमनेन विप्रवचसा मन्त्रेण वास्तोष्पतेः ॥ वास्तोष्पते त्वमुत्तिष्ठ संसारस्थितिकारक। गृहाणार्घ्यं मया दत्तं गृहारम्भं करोम्यहम् ॥ मम सर्वहितार्थाय विष्णुलोकाय वै नमः। गर्त्ते तस्मिन् कलिलभरिते निश्चलं वारिभर्त्तुः स्थैर्य्यं प्रकुर्य्यात्क्रमयति हितं दक्षिणावर्त्तयोगात्। वामावर्त्तं भवति विपदे स्वामिनाशश्च कुर्य्यात् भूमिच्छेदात् व्रजति मधुतां वित्तनाशं लभेद्वा" ॥ देवीपुराणे। "ततो गर्त्तं खनेन्मध्ये हस्तमात्रं प्रमाणतः। चतुरङ्गुलमात्रं तदधः खन्यात् सुसमितम्। आचार्य्यः प्राङ्मुखो भूत्वा ध्यायेद्देवं चतुर्मुखम्। अर्घ्यं दद्यात् सुरश्रेष्ठ कुम्भतोयेन मन्त्रवित्। तस्मिन् शुक्लानि पुष्पाणि प्रक्षिपेदोमितिस्मरन्। तदागर्त्तं परीक्षेत दधिभक्तान्वितं क्षिपेत्। ईशाने सूत्रपातः स्यादाग्नेय्यां स्तम्भरोपणम्। द्वारं नवमभागे तु कार्य्यं वामात् प्रदक्षिणम्"।

द्वारस्य विशेषमाह "तृतीयतुर्य्ययोः प्राच्यां याम्ये तुर्य्ये च पश्चिमे । तुर्य्यपञ्चमयोः पञ्च त्रिचतुर्थेषु चोत्तरे" । वामात् प्रदक्षिणमिति गृहाभ्यन्तरे स्थित्वा ऐशान्यादिक्रमेण कार्य्य-मित्यर्थः । तत्र प्रयोगः । कृतस्नानादिः शुभे लग्ने वास्तु-दक्षिणभागे चतुरङ्गुलखातहस्तमात्रमर्त्ते बहुतरनूतनजलगो-मयोपलिप्तजलपूरिते शालग्रामे वा गणेशादीन् प्रणवादि नमो-ऽन्तेन स्वं स्वं नाम्ना पूजयेत् । गणेशाय इन्द्राय वह्नये यमाय नैर्ऋताय वरुणाय कुबेराय ईशानाय ब्रह्मणे अनन्ताय सूर्य्याय सोमाय मङ्गलाय बुधाय बृहस्पतये शुक्राय शनैश्चराय राहवे केतुभ्यः क्षेत्रपालेभ्यः क्रूरभूतेभ्यः ब्रह्मणे वास्तुपुरुषाय शिखिने पर्जन्याय जयन्ताय इन्द्राय सूर्य्याय सत्याय भृशाय आकाशाय वायवे विष्णवे पूष्णे वितथाय गृहक्षताय यमाय गन्धर्व्वाय भृङ्गराजाय मृगाय पितृभ्य दौवारिकाय सुग्रीवाय पुष्पदन्ताय वरुणाय असुराय शेषाय पापाय रोगाय अहये मुख्याय भल्ला-टाय सोमाय सर्पाय अदित्यै दित्यै आपाय सावित्रे जयाय रुद्राय अर्य्यम्णे सवित्रे विवस्वते इन्द्राय मित्राय राजयक्ष्मणे पृथ्वीधराय आपवत्साय ब्रह्मणे चरक्यै विदार्य्यै पूतनायै पाप-राक्षस्यै स्कन्दाय अर्य्यम्णे जम्भकाय पिलिपिच्छाय वासुदेवाय। नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहा इत्यनेन पूजयेत् । श्रियै वासुदेवगणाय पृथिव्यै । ८१ । पृथिव्यर्घ्यमन्त्रस्तु । "हिरण्यगर्भे वसुधे शेषस्योपरिशायिनि । वसाम्यहं तव पृष्ठे गृहाणार्घ्यं धरित्रि मे" ॥ ततः प्रणम्य प्रार्थयेत् "शुभे च शोभने देवि ! चतुरस्रे महीतले । शुभदे शुभगे देवि ! गृहे काश्यपि रम्यताम् ॥ अव्यङ्गे चाक्षते पूर्णे मुनेराङ्गिरसः सुते । तुभ्यं कृता मया पूजा समृद्धिं गृहिणः कुरु । वसुन्धरे वरा-रोहे स्थानं मे दीयतां शुभे ॥ त्वत्प्रसादान्महादेवि ! कार्य्यं

मे सिध्यतां द्रुतम्। अग्निभ्योऽप्यथ सर्पेभ्यो ये चान्ये तत्समाश्रिताः। तेभ्यो बलिं प्रयच्छामि पुण्यमोदनमुत्तमम्। भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन॥ ते गृह्णन्तु बलिं सर्वे वास्तुगृह्णाम्यहं पुनः"। इति मन्त्राभ्यां माषभक्तबलिं दद्यात्। ततः "प्रणमेद्दण्डवद्भूमौ मन्त्रेणानेन भक्तितः। भूतानि यानीह वसन्ति तानि बलिं गृहीत्वा विधिनोपपादितम्॥ अन्यत्र वास परिकल्पयन्तु क्षमन्तु तानीह नमोऽस्तु तेभ्यः"। ततस्तस्मिन् गर्त्ते दधिदूर्वापुष्पफलाम्रपल्लवमुखेनाम्बुपूर्णघटेन पयोऽर्घ्यैः वास्तोष्पतये नम इत्यर्घ्यं दद्यात्। "विश्वाधाराय देवाय नमस्ते विश्वकर्मणे"। स्वाहेत्युवाच्य विश्वकर्मणे नम इति पूजयेत्। ततः "वास्तुदेवगणाः सर्वे पूजामादाय वार्षिकात्। इष्टकर्मप्रसिद्ध्यर्थं पुनरागमनाय च"। क्षमध्वमिति विसर्जयेत्। ततस्तदर्घ्यजलपूरितगर्त्ते प्रणवेन शुक्लपुष्पं क्षिप्त्वा शुभाशुभं पश्येत् निश्चल चेत् कर्त्तुः स्थैर्य्यं जनयति दक्षिणावर्त्तात् श्रितं वामावर्त्तात् विपदं नाशं भूमिच्छेदादिसन्नाशं मधुर्त्ता वा ततस्तत्र दधिदूर्वादिकं दत्त्वा मृत्तिकया गर्त्तं पूरयेत्। ततः सूत्रपाताय ईशानादि प्रदक्षिणाच्चतुरः कीलकान् "विशन्तु ते तले नागा लोकपालाश्च कामगाः। गृहे त्वस्मिंश्च तिष्ठन्तु आयुर्बलकराः सदा" इति मन्त्रेण चतुष्कोणेषु दृढं रोपयेत्। तत ईशानादिक्रमेण सूत्रेण तं वेष्टयेत्। तत आग्नेय्यां गर्त्ते गन्धपुष्पाद्यलङ्कृतं स्तम्भं रोपयेत्। तत्र मन्त्रः। "यथाचलोगिरिर्मेरुर्हिमवांश्च यथाचलः। शुभप्रदगृहस्तम्भ तथात्वमचलो भव"॥

अथ गृहप्रवेशः। "स्थाप्य समाप्य क्रतुयूपकाष्टं गृहप्रवेशो गजवाजि बन्धः। ग्रामे प्रवेशो नगरे पुरे वा दिने प्रयस्तानि शनैश्चरस्य॥ ज्येष्ठादितिभ्यां सयुक्तं गृहारम्भादि-

नत्र यत्। सम्यक् योजयेद्वेश्मप्रवेशे दैवचिन्तकः"॥ विष्णुधर्मोत्तरे। "गोपुच्छविन्यस्तकरः प्रविशेच्च गृहं गृही। अनुलिप्तः सुवासास्त्वीयपत्नीकस्तथैव च॥ कृत्वाग्रतो द्विजवरानथ पूर्णकुम्भं दध्यक्षताम्रदलपुष्पफलोपशोभम्। दत्त्वा हिरण्यवसनानि तदा द्विजेभ्यो माङ्गल्यशान्तिनिलयं निलयं विशेच्च"॥ महाभारते "पारावतमयूराश्च शुका वै सारिकास्तथा। गृहस्थेन सदा पोष्या आत्मनः श्रेय इच्छता"॥ मत्स्यपुराणम्। "गोगजाश्वादिशालास्तु तत् पूर्वोपस्य निर्गमम्। अस्तं गते न कर्त्तव्यं देवदेवे दिवाकरे"॥ गृहमुपक्रम्य गोभिलः। "वर्जयेत् पूर्वतोऽश्वत्थमक्षं दक्षिणतस्तथा। न्यग्रोधमपराद्देशादुत्तराच्चाप्युडुम्बरम्॥ अश्वत्थोऽग्निभयं कुर्य्यात् प्लक्षो ब्रूयात् प्रमायुकान्। न्यग्रोधो राजसं पीडा क्षुधामयमुडुम्बरः"॥ प्लक्षः पर्कटी प्रमायुकान् प्रकृष्टपित्तानमायुः पित्तमित्यमरः। इति गृहारम्भप्रवेशौ।

"हस्तानुराधवसुतिष्यविशाखहस्तचित्रोत्तराश्विपवनादितिरेवतीषु। जन्मर्क्षजीवबुधशुक्रदिनोत्सवाद्ये भार्य्या नव वसनमीश्वरदेवतुष्टौ। नववस्त्रपरिधानम्॥ पुष्यार्कादितिपित्र्यमित्रमघभद्वित्तध्रुवत्वष्टृषु मुक्तादन्तसुवर्णविद्रुममयान् दध्याद्विशुद्धे करौ। पुष्टेऽप्ये समये शुभे ध्रुवसुराचार्य्यादितौ स्त्र्यङ्गना नो रत्नं विभृयात् प्रवालकमयान् शङ्खं द्विजास्वामिने"। इति रत्नधारणम्। पूर्वं स्त्रीपुंसामान्येन विधाय पश्चात् स्त्रिया विशेषनिषेधः। "मूलेन्दुपूर्वात्रयशाक्रपित्र्यसर्पाग्निशक्रानिलमूलभेषु। खट्वादिसम्भारणमेव कुर्य्यात् तिथौ विरिक्ते च शुभे शुभाहे" इति खट्वादिधारणम्। "मैत्रेन्दुपौष्ण-पित्र्यमादितिवाजिचित्रा हस्तोत्तरात्रयकरोत्यविधातृभानि। एतेष्वभीष्टशयनासनपादुकादि-सम्भोगकार्य्यमुदित

मुनिभिः शुभाहे"। श्रीपतिसंहितायाम्। "हस्तादिति ब्रह्मगुरूत्तरेषु पौष्णाश्विमूलेन्दुभचित्रभेषु। वारेन्दुजीवेष्व-सितेन्दुजानां शय्यासनादीनि हितप्रदानि"। चिन्तामणौ हारीतः। "हरिकरमरुदनुराधाविधात्रपौष्णादितिद्वयोत्तरभे भोजनविधिशय्यासनभोगारम्भो हितार्थाय" इत्यलङ्कारादि-धारणम्।

"पुष्या मैत्रकरोत्तरत्वष्ट्रवरुणब्रह्माम्बुपितेन्दुभैः शस्तोऽर्क्के शुभवारयोगतिथिषु क्रूरे स्ववीर्य्येषु च। पुष्पेन्दौ जलराशिगे दशमगे शुक्रे शुभांशोदये प्रारम्भः सलिलालयस्य शमदो जीवेन्दुपुत्रोदये। वारुणमूलविशाखसौम्यध्रुवहस्तपौष्णपुष्येषु। तरुगुल्मलतादीनामारोपणं प्रशस्तम्"॥ द्रुमादिरोपणम्।

अथ पुष्करिण्यारम्भः। मत्स्यपुराणे। "प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे। आषाढ़े द्वे तथा मूलमुत्तरा त्रयमेव च॥ ज्येष्ठाश्रवणरोहिण्यः पूर्वभाद्रपदे तथा। हस्ताश्विनी रेवती च पुष्यो मृगशिरस्तथा॥ अनुराधा तथा स्वाती प्रति-ष्ठादिषु शस्यते"॥ अतीते प्राप्ते गत्यर्थस्य प्राप्त्यर्थत्वात्। भविष्ये। "प्रतिपच्च द्वितीया च तृतीया पञ्चमी तथा। दशमी त्रयोदशी चैव पौर्णमासी च कौसिता॥ सोमो बृहस्पतिश्चैव शुक्रश्चैव तथा बुधः। एते सौम्यग्रहाः प्रोक्ताः प्रतिष्ठायाग-कर्म्मणि"॥ व्यवहारसमुच्चये। "प्रतिष्ठा सर्वदेवानां केशवस्य विशेषतः। उत्तरायणमापन्ने शुक्लपक्षे शुभे दिने॥ कृष्णपक्षे च पञ्चम्यामष्टम्याश्चैव शस्यते। द्वादश्येकादशीराका शुक्ले कृष्णे च पञ्चमी॥ अष्टमी च विशेषेण प्रतिष्ठायां हरेः शुभाः। ध्रुव लघु मृदुवर्गे वारुणे विष्णुदैवे मरुदितिधनिष्ठे शोभने वासरे च। त्रिदशमदनजन्मैकादशे शीतरश्मौ विबुधकृति-रभीष्टा नाडिनक्षत्रहीने"॥ देवताघटनम्। प्रालेयवासव-

करादितिभाश्विनीषु पौष्णामरेज्यशशिभेषु तथोत्तरासु। कर्त्तुः शुभे शशिनि केन्द्रगते च जीवे कार्य्या हरे शुभतिथौ विधिवत् प्रतिष्ठा॥ पुष्याश्विशक्रभगदैवतवासवेषु पौष्णानिलेशमघरोहिणीमूलहस्ते पौष्णानुराधहरिभेषु पुनर्वसौ च कार्य्याभिषेकतरुभूतपतिप्रतिष्ठा" ॥ महेशादिप्रतिष्ठा। ध्रुवमृदुनचत्रगणे रवि शुभवारेषु सुतिथौ दीचा। स्थिरलग्ने शुभे चन्द्रे कोणे शुभे गुरौ धर्मे। दीचाकरणम्। भुजबले। "युगादायने पुण्ये कर्त्तव्या विषुवद्दये। चन्द्रसूर्य्यग्रहे वापि दिने पुण्येऽथ पर्वसु॥ या तिथिर्यस्य देवस्य तस्यां वा तस्य दीचणे। गृह्यागमविशेषेण प्रतिष्ठा सुक्तिदायिनी" ॥ पद्मपुराणे। "प्रतिपद्धनदस्योक्ता पवित्रारोहणे तिथिः। श्रिया देव्या द्वितीया च तिथीनामुत्तमा स्मृता॥ तृतीया त्वयवान्या च चतुर्थी तत्सुतस्य च। पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य च॥ सप्तमी भास्करस्योक्ता दुर्गायाश्चाष्टमी तिथिः। मातृणां नवमी प्रोक्ता दशमी वासुकेस्तथा॥ एकादशी ऋषीणाञ्च द्वादशी चक्रपाणिनः" ॥ चक्रपाणिन इति पयव्यवहार इत्यस्मात्। "त्रयोदशी त्वनङ्गस्य शिवस्य च चतुर्दशी। मम चापि मुनिश्रेष्ठ पौर्णमासी तिथिः स्मृता" ॥ इति देवप्रतिष्ठा।

"शुभहरिधटलग्ने देवराट्युग्मियाम्याविनयनविधियाम्यहस्तसपौष्णभेषु सुकरणतिथियोगे शुक्रजीवार्कवारे तरणिघटनमिष्टं चन्द्रताराविशुद्धौ"। नौकाघटनं "शुभाहे विष्णुयुग्मेन्दुभगमैत्राश्विपाणिषु। चालनं घटनस्यामात् नावः शुभतिथीन्दुषु" ॥ निष्पन्न नौकाचलनम्। "पञ्चिकरेज्यसुधासुधानिधिपूर्वामित्रधनाच्युतभे शुभलग्ने। तारकयोगतिथीन्दुविशुद्धौ नौगमनं शुभदं शुभवारे" ॥ नौयात्रा। हारीतः। "जन्माधाने निधनगे प्रत्यरौ च विपत्करे। यदि व्याधिः

समुत्पन्नः क्षेमाय मरणाय वा॥ यदा तारा: शुभा: पुंसां नक्षत्रस्याशुभं फलम्। तत्र नात्यन्तिकं श्रेयमिवमन्यत्र पण्डितैः॥ तथात्र चन्द्रमाश्चास्य गोचरे चाशुभप्रदः। तदा नूनं भवेन्मृत्युः सुधासम्पीतदेहिनः॥ शिखिगुणरसेन्द्रियाऽनलशशिविषयगुणर्त्तुपञ्चवसुपक्षाः। विषयैकचन्द्रयुग्मार्णवाऽग्निरुद्राश्विलदहनाः। भूतशतपक्षवसवो द्वौ त्रिंशच्चहततारकामानम्"॥ तदनुसारेण फलकथनम्। "आर्द्रा श्लेषा स्वाती पूर्वा ज्येष्ठासु च यस्य रोगजन्म स्यात्। धन्वन्तरिणापि चिकित्सितस्य तस्यासवो न स्युः" कौशिकः। "कृत्तिकासु यदा व्याधिरुत्पन्नां संप्रतिपादितः। नवरात्रं भवेत् पीड़ा त्रिरात्रं रोहिणीषु च॥ मृगशीर्षे पञ्चरात्रमार्द्रायां मुच्यतेऽसुभिः। पुनर्वसौ तथा पुष्ये सप्तरात्रं विधीयते॥ नवरात्रं तथाश्लेषे मासमेकं मघासु च। द्वौ मासौ पूर्वफल्गुन्यामुत्तरासु त्रिपक्षकम्॥ हस्ते च सप्तमे मोक्षश्चित्रायामर्द्धमासकम्। मासद्वयं तथा स्वात्यां विशाखे दिनविंशतिः॥ मैत्रे चैव दशाहानि ज्येष्ठायामर्द्धमासकम्। मूले न जायते मोक्षः पूर्वाषाढे त्रिपक्षकम्॥ उत्तरे विंशतिर्ज्ञेया द्वौ मासौ श्रवणे तथा। धनिष्ठायामर्द्धमासं वारुणाख्ये दशाहकम्॥ न च भाद्रपदे मोक्ष उत्तरासु त्रिपक्षकम्। रेवत्यां दिनविंशत्या चाहोरात्रं तथाश्विनौ॥ प्राणैर्विमुच्यते नित्यं भरण्यां नात्र संशयः। कौशिकेन समादिष्टा नक्षत्रव्याधिसम्भवाः॥ नक्षत्रं प्रतिकर्त्तव्यं नक्षत्रपथजानता।' कौरहयस्य समिधो जुहुयाद्वह्निदैवते॥ तिलमधतान् याम्ये घृतमेवाग्निदैवते। प्राजापत्ये जुहुयात्तु ग्राम्यबीजकदम्बकम्॥ सौम्ये गव्यं पयो रौद्रे सर्पिर्मधुसमन्वितम्। अदितिर्देवता यस्य घृताक्तास्तिलतण्डुलाः॥ पायसं सर्पिषा चैव बृहस्पत्यधिदैवते। सार्पो-

दधिश्च पयश्च सर्पिः सर्पाधिदैवते॥ पितरो देवता यस्य घृताक्तास्तिलतण्डुलाः। अच्युताय भगे सर्पिस्तथोत्तरे॥ साविच्रे दधिहोमो त्वष्ट्रे चित्रोदन हविः। यवाः स्वात्याञ्च होतव्याश्चन्द्राग्निभे तु पायसम्॥ मैत्रे सर्पिस्तु जुहुयात्तदेव चेन्द्रदैवते। यथोपपन्नमन्नञ्च जुहुयान्नैरृते तथा॥ अब्दैवते शालिबीजं वैश्वदेवे तु रूपकम्। रक्ताश्च तण्डुलाश्चाय होतव्या विष्णुदैवते॥ न्यग्रोधोडुम्बराश्वत्थसमिधो वसुदैवते। वारुणे वारिजातानां पुष्पाणां होम इष्यते॥ अजैकपादे होतव्यं प्राजापत्येन तत्समम्। अहि र्बुध्ने॥ नक्षत्रे पिष्टकाद्यं प्रशस्यते॥ पौष्णे फलान्यखण्डानि जुहेदष्टोत्तरं शतम्। सावित्र्या हुतमेतत्तु ब्राह्मणाभिहितं पुरा॥ स्नात्वा चैव तु होतव्यं सद्यो ज्वरहरं परम्" ॥ भीमपराक्रमे। "अश्विन्यां पिष्टकच्छागमुखे दध्युदकञ्च देयम्। रोहिण्यां पिष्टकगोमुखे शाकम्॥ मृगशिरसि पिष्टकमृगमुखे माषो देयः। आर्द्रायां पिष्टकगोमुखे रक्तम्। पुनर्वसौ पिष्टकवराहमुखे पटोलम्। पुष्ये पिष्टकच्छागमुखे पायसम्। अश्लेषायां पिष्टकवराहमुखे घृतम्। मघायां पिष्टकवानरमुखे तिलाः। पूर्वफल्गुन्यां पिष्टकनरमुखे गुडतिलपूपिकाः। उत्तरफल्गुन्यां पिष्टकबलीवर्दमुखे शाकम्। हस्तायां पिष्टकमहिषमुखे पुष्करमूलम्। चित्रायां पिष्टकव्याघ्रमुखे तगरपुष्पम्। स्वात्यां पिष्टकमार्जारमुखे तिलाः। विशाखायां पिष्टकव्याघ्रमुखे गुडभक्तम्। अनुराधायां पिष्टकमृगमुखे कुल्माषम्। ज्येष्ठायां पिष्टकमूषिकमुखे धन्याकम्। मूले पिष्टकमार्जारमुखे तिलम्। पूर्वाषाढायां पिष्टककुक्कुरमुखे वचा। उत्तराषाढायां पिष्टकद्वयमुखे शाकभक्तम्। श्रवणायां पिष्टकमहिषीमुखे रक्तम्। धनिष्ठायां पिष्टकनरमुखे शाकभक्तम्। शतभिषायां पिष्टक-

वानरमुखे पिप्पली। पूर्वभाद्रपदायां पिष्टकनरमुखे सिततण्डुलाः। उत्तरभाद्रपदायामप्येवम्। रेवत्यां पिष्टकनरमुखे गुडभक्तम्"। अश्विनो भरण्योरप्येवम्। एवं नक्षत्रदोहदे कृते ज्वरो नश्यति। एतद्विधानन्तु प्रथमं गन्धपुष्पधूपदीपनैवेद्यैः सदीपमाल्यपताकैः प्रपूज्य कार्य्यम्। "उरगमघार्द्राभवाद्रांख्यं हयाग्यविपूर्वास्वपि च रविजभौमे चार्कवारेण योगे। यदि भवति चतुर्थी द्वादशी भूतषष्ठी निगदित इह जन्तोर्नाशकालः प्रविष्टः॥ चरराशौ विलग्नस्थे द्विदेहार्द्धे च पश्चिमे। रोगस्य प्रशमः प्रश्ने विपर्य्यासे विपर्य्ययः॥ शुभग्रहाः सौम्यनिरीक्षिताश्च विलग्नसप्ताष्टमपञ्चमस्थाः। त्रिषड्दशा येषु निशाकरः स्यात् शुभं वदेद्रोगनिपीड़ितानाम्॥ पापचेत्तु प्रश्नलग्ने पापसंयुतवीक्षिते। तथैव चाष्टमस्थाने रोगिणां मरणं भवेत्"॥ मरणसूचकयोगद्वयम्। "मन्दः पापसमेतो लग्नाष्टमः शुभैरयुतदृष्टः। रोगार्त्तः परदेशे चाष्टमगो मृत्युकर एव"॥ परदेशस्थस्य रोगस्थानं मृत्युस्थानञ्च। "मूलमघार्द्राश्लेषा भरणी विशाखाग्निदैवतेषु नरः। गरुड़प्रियोऽपि दष्टो न प्राप्तिति दन्दशूकेन॥ पाताञ्जनालेपनलावणैस्तु दैवविषं समुत्सारयति"॥ दष्टस्य गारुडीमूलं यदि पृष्टमध्यामलं भवति। गारुडी पुनर्नवा। "पर्कजटावल्कलमस्य चूर्णमतिशिशिरसलिलसंयुक्तम्। पीतमश्चिकमकरीनाशकद्यारिविषाणां विद्रावणम्॥ चोपसलिलमसृणवर्त्तितकाकलिकामूलपानलेपनेन। अपसरति मण्डलिविषं मारुतविक्षतमिव घनवृन्दम्"॥ चोपसलिलं काञ्जिकं काकलीमूलं गुञ्जामूलम्। "लज्जालुकामूलं नीलीमूलमातपतण्डुलजलेन। मण्डलिविषमतिविषममपि पीतं निवारयति॥ यः पिबति पुष्यदिवसे जलपिष्टं सितं पुनर्नवामूलम्। पार्श्वेनापि न खलु विचरति तस्याहि वृश्चिको

षर्षम्" ॥ शातातपीयकर्मविपाके । "महापातकजं चिह्नं सप्तजन्मसु जायते । उपपातकजं पञ्च त्रीणि पापसमुद्भवम् ॥ दुष्कर्मजा नृणां रोगा यान्ति चैव क्रमात् शमम् । जपैः सुरार्चनैर्होमैर्दानैस्तेषां शमो भवेत् ॥ पूर्वजन्मकृतं पापं नरकस्य परिक्षये । बाधते व्याधिरूपेण तस्य कृच्छ्रादिभिः शमः ॥ कुष्ठञ्च राजयक्ष्मा च प्रमेहो ग्रहणी तथा । मूत्रकृच्छ्राश्मरीकासा अतीसारभगन्दरौ ॥ दुष्टव्रणं गण्डमाला पक्षाघातोऽक्षिनाशनम् । इत्येवमादयो रोगा महापापोद्भवाः स्मृताः ॥ जलोदरयकृत्प्लीहशूलरोगव्रणानि च । श्वासाजीर्णज्वरच्छर्दिभ्रममोहगलग्रहाः ॥ रक्तार्बुदविसर्पाद्या उपपापोद्भवा गदाः । दण्डापतानकश्चित्र वपुः कम्पविचर्चिकाः ॥ वल्मीकपुण्डरीकाद्या रोगाः पापसमुद्भवाः । अर्शआद्या नृणां रोगा अतिपापोद्भवा मताः ॥ अन्ये च बहवो रोगा जायन्ते रोगसङ्कराः । उच्यन्तेऽथ निदानानि प्रायश्चित्तानि च क्रमात् ॥ महापापे तु सर्वं स्यात्तदर्द्धमुपपातके । दद्यात् पापे तु पादांशं कल्प्य व्याधिबलाबलम् ॥ नवमुष्ट्यावधं पुण्यं प्रदद्याद्देवतार्च्चने । दद्याद्द्विजसहस्राय मिष्टान्नं द्विजभोजने ॥ गोदाने वत्सयुक्ता गौः सुशीला च पयस्विनी"॥ गोदानमधिकृत्यादिपुराणे । "परोगयैव जायेत तेजस्वी च भवेन्नरः" ॥ मनुः । "औषधान्यगदो विद्या दैवी च विविधा स्थितिः । तपसैव प्रसिध्यन्ति तपस्तेषां हि साधनम्" ॥ "अगदोनैरुज्यम् । शातातपः । "यथा निदानं दोषोत्थः कर्मजो हेतुभिर्विना । महारम्भोऽल्पके हेतावन्तिमो दोषकर्मजः" ॥ सारावल्याम् । पथ्याशिनो शीलवतो नराणां सद्वृत्तिभाजां विजितेन्द्रियाणाम् । एवं विधानामिदमायुरत्र चिन्त्यं सदा हरमुनिप्रवादः" ॥ ध्यानमाह याज्ञवल्क्यः । "वर्षाधारस्नेहयोगाद् यथा दीपस्य

संस्थितिः। विक्रियापि च दृष्टैवमकाले प्राणसंशयः"॥ यथा चाविकलवर्त्त्यादिसत्त्वे प्रचण्डवातादिना दीपनाशस्तथा सत्यप्यायुषि चाशुभकर्मवशात् नौदुर्गवत्तं युद्धापथ्यसेवित्वा-दिना प्राणनाश इति। आयुर्वेदे। "यथाशास्त्रन्तु निर्णीतो यथा व्याधिचिकित्सितः। न शमं याति यो व्याधिः स ज्ञेयः कर्म्मजो बुधैः"॥ तच्चिकित्सायां भारतीशभट्टाचार्य्यः। "दाने-र्देवादिभिरपि हितदेवता गोगुरुवर्द्धनाप्रणतिभिश्च जपैस्त-पोभिः। इत्युक्तपुण्यनिचयैरुपचीयमानाः प्राक् पापजा यदि रुजः प्रशमं प्रयान्ति"॥ अतएव हेमाद्रिधृतदानखण्डे तत्त-द्रोगे तत्तद्दानाभिधानपूर्व्वकं भगवद्वाक्यम्। "सुवर्णदानं सर्व्वेषां रोगाणां शमकारणम्। तस्मात् सर्व्वप्रयत्नेन कर्त्तव्यं कमलोद्भव"॥ कर्म्मदोषोभयजव्याधौ च। "दानादिभिः कर्म्मभिरौषधीभिः कर्म्मक्षये दोषपरिक्षये च। निहरन्ति ये यत्नवतां कथञ्चित्तत्कर्म्मदोषप्रभवा गदास्तु"॥ अतएवोक्तम्। "प्रायश्चित्तमकृत्वा तु कर्म्म कुर्य्यान्न किञ्चन। अनिस्तीर्णमघं यस्माद्द्विगुणं परिपश्यति"॥ केवलदोषजे तु। "स्वैरेतदुष्टै-रनिलादिदोषैरुपप्लुतैः स्वेषु परिस्थलाद्भिः। भवन्ति ये प्राण-भृतां विकारास्ते दोषजा भेषजशुद्धिसाध्याः"॥ बृहस्पतिः। "अज्ञातौषधमन्त्रस्तु यश्च व्याधेरतत्त्ववित्। रोगिभ्योऽर्थं समादत्ते सदण्ड्यश्चौरवद्भिषक्"॥ नन्दिपुराणे। "पथ्यैकं भौषधं ज्ञात्वा जन्तुं यादृशतादृशम्। आयुर्वेदप्रभावेण किन्न दत्तं भवेद्भुवि"॥ किन्न दत्तं भवेदिति सर्व्वदानफलं लभते इत्यर्थः। लिङ्गपुराणम्। "प्रायश्चे कर्म्मणि क्षीणे लोकोऽयं दृश्यते मया। औषधानि च मन्त्राश्च न होमो न पुनर्जपः। त्रायन्ते मृत्युनोपेतं जरया वापि मानवम्"॥ इति काल-वाक्यम्। हरिवंशेऽपि। "दैवं पुरुषकारेण न शक्यमति-

वर्त्तितुम्" इति । "न स्पृशन्ति न शृण्वन्ति न पश्यन्ति गतायुषः । दीपनिर्वाणगन्धञ्च सुहृद्वाक्यमरुन्धतीम्" ॥ विष्णुधर्म्मोत्तरे । "हरिं गोद्विजचन्द्रार्कसुराग्नीन प्रतिपूज्य च । शृण्वन् मन्त्रमिमं पुण्यं विद्वान् भेषजमारभेत् ॥ ब्रह्मदक्षाश्विरुद्रेन्द्राभूचन्द्रार्कानिलानलाः । ऋषयश्चौषधिग्रामा भूतसङ्घाश्च पान्तु ते ॥ रसायनमिवर्षीणां देवानाममृतं यथा । सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते" ॥ स्वयं भक्षणे तु ते इत्यत्र मे इति पठेत् । अविशेषेण भक्षणेऽपि पठेत् । "इह्नोदये गुरुबुधेन्दुसितेषु तेषां वारे रवेश्च सुविधौ सुतिथौ सुयोगे भेषूग्रपन्नगविशाखशिवेतरेषु कल्पश्चविष्टिरहितेष्वगदः शुभाय" ॥ औषधकरणम् "चित्रायुगे विधियुगे मित्रयुगे लघुषु वासवविष्णौ । वस्तिविरेचनसेवा शुभदिनतिथिचन्द्रलग्नेषु" ॥ वस्तिः चर्मपुटः विरेचन विरेक । वेधो व्रणादिवेध । "पौष्णाश्विनी द्रविणशक्रसमीन्द्रपुष्याहस्तादितोन्दुहरिमूलमृगाग्निमित्रे । चित्रान्वितेश्च गुरुबुधेन्दुरवीज्यवारे भैषज्यपानमचिरादपहन्ति रोगान्" ॥ उत्तरात्रयेऽपि बहुलम्मतीति वचनात् । रत्नमालायाम् । द्यूनमृत्युनिधनव्ययशत्रौ सद्ग्रहैषु निरता बल वत्सु । आयुषश्च हितकारिषि योगी कीर्तिता नियतमौषधसेवा" । द्यूनादिषु पादयोगे अपशून्येषु आयुष्मानित्यादिनित्ययोगे । भौमपराक्रमे । "भैषज्यपाने गुरु सोमशुक्रा शुभ विलग्न दिवसो रवेश्च । तिथावरिक्ते करणे च शस्ते योगे च लग्ने स्थिरशरीर सङ्गे" ॥ तत्रैव "रोहिणी चानुराधा च शस्तमौषधभक्षणे" इति वचनाद्रोहिण्यामपि । "ध्वादित्येषु चरेषु शक्रदिनभत्पृष्योपचन्द्रेषु च । क्रूराहव्यतिपातविष्टिदिवसैर्विन्दावशस्ते तथा ॥ केन्द्रस्थेष्वशुभेष्वकामतिथिषु स्नान गदी मुक्तित. । शस्तं तत्र न शोभनाविधिभुजङ्गर्च्चेन्दु सदाक्षरा." ॥ रोगिस्नानम् । "सेवा

चक्रे सप्तशीर्षे सप्तपृष्ठे तथोदरे। पादयोः सप्त ऋक्षाणि साभिजिन्ति न्यसेद्बुधः॥ स्वामिमाद्यत्रमं गच्छे भृत्यमात् स्वामिमं ततः। निष्फलं पादपृष्ठस्थे सफलं मस्तकोदरे"॥ सेवा चक्रम्। "ध्रुवलघुमृदुवर्गे वासवे विष्णुदेवे विकुजरविज-वारे केन्द्रकोणेषु सत्सु। हितनुहषभमषाख्योदये चन्द्रशुद्धौ सुतिथिकरणयोगे दर्शनं भूमिपानाम्"॥ राजदर्शनम्। मत्स्यपुराणे। "राज्ञस्तु दक्षिणे पार्श्वे वामे चोपविशेत्तथा। पुरस्तात्तु तथा पश्चात् आसनन्तु विगर्हितम्॥ स्वयं तथा न कुर्वीत स्वगुणाख्यापनं पुनः। स्वगुणाख्यापने चैव परमेव प्रयोजयेत्। परार्थमस्य वक्तव्यं सुखे चेतसि भार्गव। स्वार्थं सुहृद्भिर्वक्तव्यं न स्वयन्तु कदाचन"॥ अस्य राज्ञः। "अज्ञा-प्यमाने चान्यस्मिन् समुत्थाय त्वरान्वितः। अहं किं करवा-णीति वाच्यो राजा विजानता। नातिवक्ता न निर्वक्ता न च मात्सरिकस्तथा॥ चात्मसम्भावितश्चैव न भवेत्त कथञ्चन। आराधनासु सर्वासु भृत्यवत्स विचेष्टिते। कथासु दीर्घं क्षिपति वाक्यभङ्गं करोति च। विरक्तलक्षणं ह्येतदनुरक्तस्य लक्षणम्। दृष्ट्वा प्रसन्नो भवति वाक्यं गृह्णाति चादरात्। कुशलादि-परिप्रश्नो सम्प्रापयति चासनम्। इति रक्तस्य कर्त्तव्या सेवा रविकुलोद्भव। यदप्यल्पतरं कर्म तदप्येकेन दुष्करम्॥ पुरु-षेणासहायेन किन्तु राज्यं महत्पदम्। कामं क्रोधं मदं मानं लोभं हर्षं तथैव च। जित्वाभ्यन्तरषड्वर्गं सततं पृथिवी-क्षिता। न राज्ञा मृदुना भाव्यं मृदुर्हि परिभूयते। न भाव्यं दारुणेनापि तीक्ष्णादुद्विजते जनः। अदीर्घसूत्रश्च भवेत् सर्व-कर्मसु पार्थिवः। दीर्घसूत्रस्य नृपतेः कर्म नष्टं भवेत् स्वयम्। रोगे दर्पे च मान्ये च द्रोहे पापे च कर्मणि। अप्रिये चैव कर्त्तव्ये दीर्घसूत्रः प्रशस्यते। भृत्यैः सह महीपालः परीक्षा-

सम्य वर्जयेत्। भृत्याः परिभवन्तीह नृपं हर्षणसत्कथम्।
पौरुषं दैवसम्पत्त्या काले फलति पार्थिव। त्रयमेतन्मनुष्यस्य
पिण्डितं स्यात् फलावहम्। कृषेर्वृष्टिसमायोगात् दृश्यन्ते
फलसिद्धयः। तास्तु काले प्रदृश्यन्ते नैवाकाले कथञ्चन"॥
महाभारते। "लाभेन हर्षयेद् यस्तु न व्ययेद् यो विमानितः।
असंमूढश्च यो नित्यं स राजवसतिं वसेत्। बलवान् शूर
आत्मानञ्छायेवानुगतः सदा। सत्यवादी मृदुर्दान्तः स राजव-
सतिं वसेत्"॥ नयमाह हरिवंशे नारदः। "अनुक्तं वापि
सुहृदा वक्तव्यं जानता हितम्। न्यायश्च प्राप्तकालश्च परा-
भवमजानता। वक्तव्यं सर्वदा सद्भिरप्रियञ्चापि यद्धितम्।
आत्मक्षमेतत् क्लेशस्य सद्भिरेवाहृतं पुरा। यस्योत्तापकरं पश्चात्
आरब्धं कार्य्यमीदृशम्। आरम्भेनैव तद्विद्वान् स च बुद्धिमतां
मतः। कुमित्रे सौहृदं नास्ति कुभार्य्यायां कुतो रतिः। कुतः
पिण्डं कुपुत्रे तु नास्ति सत्यं कुराजनि। कुसौहृदे क्व विश्वासः
कुदेशे न प्रजीव्यते। कुराजनि भयं नित्यं कुपुत्रे सर्वदा भयम्।
अपकारिणि विश्वासं यः करोति नराधमः। अनाथो दुर्बलो
यस्तु न चिरं स तु जीवति। न विश्वसेद विश्वस्ते विश्वस्ते नाति-
विश्वसेत्। विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति। राज-
वेविषु विश्वासं गर्भसङ्करितेषु च। यः करोति नरो मूढो न
चिरं स तु जीवति। अग्निशेषमृणाच्छेषं शेषमग्नेश्च भूमिप।
पुनर्वर्द्धन्ति सम्भूय ततः शेषं न शेषयेत्। अद्रोहं समयं कृत्वा
मुनीनामग्रतो हरिः। जघान नमुचिं पश्चादपां फेनेन पार्थिव।
कृत्वा सम्बन्धकं चापि विश्वसेच्छत्रुणा न हि। पुलोमानं
जघानादौ जामातापि शतक्रतुः। न चामयं निवस्तव्यं सर्वैरे
वर्द्धिते रिपौ। पातयेत्तं समूलं हि नदीकूलमिव द्रुमम्"।
विष्णुपुराणे। "अल्पहानिस्तु सोढव्या वैरेणार्थागमं त्यजेत्।

उपायतः समारब्धा सर्वे सिध्यन्त्युपक्रमाः" ॥ ज्योतिषे । "प्रत्यक्षं तदनुमन्दलोचन मध्यलोचनमतः सुलोचनम् । रोहिणीप्रभृतिभ चतुर्विधं नूनमत्र गणयेत् पुनः पुनः । लाभोऽन्धके निकट एव हृतस्य चौरैर्द्रव्यस्य लभ्यिरिह केकरके प्रयत्नात् । दूरश्रुतिर्भवति मध्यमलोचनाख्ये न प्राप्तिरुत्तमविलोचनभे कदाचित्"। मत्स्यपुराणे । "कार्त्तवीर्य्यार्जुनो नाम राजा बाहुसहस्रभृत् । येन सागरपर्य्यन्ता धनुषा निर्जिता मही । यस्तस्य कीर्त्तयेन्नाम कल्यमुत्थाय नित्यशः । न तस्य वित्तनाशः स्यान्नष्टञ्च लभते पुनः" ॥ कल्यं प्रातः ।

अथ परीक्षा । "नो शुक्रान्त्येऽष्टमेऽर्क्के गुरुमहितरवौ जन्मनीन्द्वष्टमेन्दौ विष्टौ मासि मलाख्ये कुजशनिदिवसे जन्मताराञ्च चाथ । नाडीनक्षत्रहीने गुरु रविरजमीनाथ ताराविशुद्धौ प्रातः कार्य्या परीक्षा हितमृचरतुलाजोदये शस्तलग्ने । षष्ट्याञ्च चतुर्दश्यां प्रायश्चित्तपरीक्षणे । न परीक्षा विवाहश्च शनिभौमदिने भवेत् । प्रायश्चित्त अनुराधा स्वधनिष्ठा पुष्या हस्तात्रयं तथा । ज्येष्ठावारुणपौष्णे च नाट्यारम्भे शुभोगणः" । नाट्यारम्भ ।

अथ कृषिकर्म । तत्र कूर्म्मचक्रम् । "प्राङ्मुखो भगवान्देव' कूर्म्मरूपी व्यवस्थितः । आक्रम्य भारतं वर्षं नव भेदं यथाक्रमम् । मध्यप्राग्नि याम्यादि कृत्तिकादित्रयत्रयैः क्रूरवेधयुतैस्तैस्तु पीड्यस्ते तन्निवासिनः । पूर्वापरे भवेद्वेधो वेधयोत्तरदक्षिणे । ईशानरक्षमोर्वेधो वेध आग्नेय मारुते । तारात्रयान्वितं तत्र मौरिं यत्नेन चिन्तयेत् । नाभियोर्यचतुष्पादकच्छपुच्छे च सस्थितम् । अतिवृष्टिरनावृष्टिः शलभा मूषिका' खगाः । स्वचक्रं परचक्रञ्च सप्तैते सम्भवन्ति च । एव देयस्थग्रामवेवनामर्चतो वदेत्" ॥ तथा च "यत्र यत्र

च मघवे दिव्यपार्थिवनाभसाः। दृश्यन्ते सुमहोत्पाताः स्वां दिशं तत्र पीडयेत्। सौरिर्बाधिको दुष्टः सत्त्ववीर्यः शुभावहः। एकदा पीडयेद् यत्र मातुजः कूर्म्मपद्मके। तत्र स्थाने महाविघ्नो जायते नात्र संशयः। दुष्टस्थाने गते चन्द्रे कर्त्तव्यं शान्तिपौष्टिकम्"। कूर्म्माङ्गस्थदेशानाह। "मध्ये सारस्वतामत्स्याः शूरसेनाः समाथुराः। पञ्चालशालमाण्डव्यकुरुक्षेत्रगजाह्वयाः। मरुनैमिषविश्वाद्रिपाण्ड्यघोषाः सयामुनाः। काम्यकोध्या प्रयागञ्च गया वैदेहकादयः। प्राच्यां मागधशोणौ च वारेन्द्रीगौडराढ़काः। वर्द्धमानतमोलिप्त प्राग्ज्योतिषोदयाद्रयः। आग्नेय्यामङ्गवङ्गोपवङ्गत्रैपुरकोशलाः। कलिङ्गौड्रान्ध्रकिष्किन्ध्या-विदर्भशवरादयः। दक्षिणेऽवन्ति-माहेन्द्रमलयाऋष्यमूककाः। चित्रकूटमहारण्यकाञ्चीसिंहलकोङ्कनाः। कावेरी ताम्रपर्णी च लङ्कात्रिकूटकादयः। नैरृते द्रविडानर्त्तमहाराष्ट्राश्च रैवतः। यवनः पह्लवः सिन्धुः पारसीकादयो मताः। पश्चिमे हैहयास्ताद्रिम्लेच्छवासशकादयः। वायव्ये गुजरातश्च माटजालन्धरादयः। उत्तरे चीननेपालङ्गनकैकेयमन्दराः। गान्धारहिमवत्क्रौञ्चवन्ध्यमादनमालवाः। कैलासमद्रकाश्मीरम्लेच्छदेशाः खशादयः। ईशाने स्वर्णभौमश्च गङ्गाद्वारञ्च टङ्कनः। काश्मीरब्रह्मपुरककिरातादरदादयः"॥ इति कूर्म्मचक्रम्। देवलः। "सिन्धुसौवीरसौराष्ट्रास्तथा प्रत्यन्तवासिनः। अङ्गवङ्गकलिङ्गौड्रान् गत्वा संस्कारमर्हति"॥ तीर्थयात्राव्यतिरेकेणेति द्रष्टव्यमिति मिताचरा। व्यासः। "उपरा वहुना भूमिः पत्यानस्तस्कराहताः। सर्वे वाणिजिकाश्चैव भविष्यन्ति कलौ युगे॥ शस्यानिष्पत्तिरफला तरुणा वृद्धशीलिनः। अभविष्यफलो हर्षः क्रोधश्च सफलो नृणाम्॥ पुरप्रायं वहुस्तोक तद्युगात्तस्य लक्षणम्"॥ तत्र ग्रामादिषु

स्वनामफलम्। ज्योतिषे। "अवर्गोऽष्टाविषुः के च षट्चे वेदाष्टवर्गके। एकं ते सप्त पे वर्गे ये द्वयं शे च वह्नयः॥ इत्यष्टसु वर्गेषु याः संख्याः कथिताः क्रमात्। नाम्निवर्गात् स्वराच्चैव प्रत्येकं तां प्रकल्पयेत्॥ एकीकृत्याष्टभिर्भुक्ते शेषसंख्या ध्वजादयः। ध्वजो धूम्रश्च सिंहः श्वा वृषभो रासभो गजः॥ ध्वाङ्क्षश्चक्रमतो ज्ञेयः फलं तत्र बलक्रमात्। ध्वाङ्क्षधूम्रवृषभा गजः सिंहो ध्वजः खरः॥ यथोत्तरबला एते ज्ञातव्याः स्वरपारगैः। ग्रामे योधे पुरे देशे मित्रनारी गृहेषु च॥ बलात् प्रायो भवेल्लाभो न लाभो बलवर्जितात्। अ गरुडः क मार्जारश्च सिंहश्च शुनीसुतः॥ त भुजङ्गः प आखुः स्यात् य वर्गे भः श मेषकः। नामादिवर्णतो ज्ञेया अष्टौ वर्गाः क्रमादमी॥ यद्वर्गभक्ष्यो यः प्रोक्तस्तस्मात्तस्य भवेत् क्षयः। ग्रामवर्गस्य ये भक्ष्यास्त्याज्यास्तद्ग्रामवासिनः॥ एवं दुर्गे रणे त्याज्या न कर्त्तव्या गडाधिपाः। अवर्गाद्यष्टकं ज्ञेयं प्रागाद्यष्टदिशां क्रमात्। स्ववर्गात् पञ्चमे स्थाने खण्डिभङ्गश्च जायते"॥ व्यासः। "धनिनः श्रोत्रियो राजा नदी वैद्यश्च पञ्चमः। पञ्च यत्र न विद्यन्ते तत्र न दिवसं वसेत्"॥ मत्स्यपुराणे। "फालकृष्टे तथा देशे सर्ववीजानि रोपयेत्। त्रिपञ्चसप्तरात्रेण यत्र रोहन्ति तान्यपि। ज्येष्ठामध्याकनिष्ठाभूर्वर्जनीयेतरा मता"॥

अथ लाङ्गलचक्रं क्षेत्रोदये। "लाङ्गले दण्डिका यूपं योक्त्रद्वयसमन्वितम्। दण्डिकादिलिखेद्भानि दिनेशाक्रान्तभादितः॥ दण्डिका हलयूपानां द्विद्विस्थाने त्रिकं त्रिकम्। योक्त्रयोश्च त्रिकञ्चैव मध्ये पञ्चाष्टकं द्वयम्॥ दण्डस्थे च गवां हानिर्यूपस्थे स्वामिनो भयम्। लक्ष्मीर्लाङ्गलयोक्त्रादौ चैत्रारम्भादिनर्चके"॥ इति लाङ्गलचक्रम्।

अथ वीजोप्तिचक्रम्। "सूर्यभादुरगाः स्थाप्यास्त्रिनाडीका-

न्तरक्रमात्। मुखे त्रीणि गले त्रीणि भानि द्वादश तूदरे॥ पुच्छे चतुर्बहिः पञ्च दिनभाच्च फलं वदेत्। वदने चौरकं विद्यात् गलकेऽङ्गारकस्तथा॥ उदरे धान्यवृद्धिः स्यात् पुच्छे धान्यक्षयो भवेत्। इति रोगभयं राज्ये चक्रे बीजोप्तिसम्भवे"॥ सूर्य्यभात् सूर्य्यभुज्यमाननक्षत्रात्। विनाडीकान्तरक्रमादिति यद्यश्विन्यां रविस्तदा तामारभ्य गणयेत्। विनाडीषु चाश्विनी-भरणीकृत्तिका दत्त्वा रोहिणी बहिः कार्य्या मृगशिरस चार्द्रा पुनर्वसु नाडीषु दत्त्वा पुष्यो बहिः कार्य्यः एवं क्रमेणान्या लेख्याः। चौरकं शस्यशून्यताम्। ईतयः। "अतिवृष्टिरना-वृष्टिः शलभा मूषिकाः खगाः। प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः"॥ इति बीजोप्तिचक्रम्।

अथ हयचक्रम्। "हयचक्रं हयाकारं सर्व्वावयवसंयुतम्। लिखित्वा विन्यसेद्भानि हयनामर्क्षपूर्व्वकम्॥ मुखाक्षिकर्ण-ग्रीवेषु शृङ्गे स्कन्धे द्विकं द्विकम्॥ त्रीणि पृष्ठे द्वय पुच्छेऽष्टौ पादे तूदरे त्रिकम्। छलप्रवाहबीजोप्तिप्रारम्भादिदिनर्क्षकम्॥ यदङ्गेषु स्थितं तस्माद्वच्चे सर्व्वं शुभाशुभम्। आस्ये हानिः सुखं नेत्रे कर्णे भिचाटन तथा॥ ग्रीवें धृतिस्तथा शृङ्गे सौख्यं स्कन्धे च मङ्गलम्। पृष्ठे कष्टं शुभ पुच्छे भ्रमः पादे सुखं हृदि। चन्द्रयोगादिदं प्रोक्तं हयचक्रफलं बुधैः"॥ इति हय-चक्रम्।

दीपिकायाम्। "पूर्व्वाग्नियाम्यफणिपित्र्यविशाख्यभेषु रिक्ता-ष्टमीविगतचन्द्रतिथिं विहाय। द्वाङ्गाभिगोमसुदाये विकु-जार्किवारे शस्तेन्दुयोगकरणेषु हलप्रवाहः। हलप्रवाहवदीज-वपनस्य विधिः स्मृतः। सिताचार्य शुभे केन्द्रे स्थिर कृमनु-लोदये"॥ भीमपराक्रमे। "यामि क्षणं वलीवर्द दक्षिणे लोहितं न्यसेत्। उत्तराभिमुखो भूत्वा कर्षकः कृषिमारभेत्॥

हले तु योजिते यत्र चेत्रे ग्रासं करोति गौः। तत्र स्याद्द्विगुणं शस्यमवश्यं गर्गभाषितम्" ॥ सत्यचिन्तामणौ बलभद्रः। "सुखदः प्रतिपच्चैव द्वितीया कार्य्यसाधिनी। आरोग्यदा तृतीया च चतुर्थी कीटकृत् सदा॥ पञ्चमी श्रीप्रदा नूनं षष्ठी च कलहप्रिया। सप्तमी स्थानदा भोग्या हर्षं हन्ति तथाष्टमी। नवमी शस्यनाशाय दशमी भूतिदा सदा। एकादशी तथा कुर्य्याद्धनं धान्यं मनोरथम्। द्वादशी प्राणसन्देहा सर्वसिद्धा त्रयोदशी। चतुर्दशी पतिं हन्ति पञ्चदश्येव निष्फला। अमावास्याष्टमी षष्ठी रिक्ता च परिवर्जयेत्। सौरिभौमदिने चैव कृष्यारम्भे धनक्षयः। प्राजेशविष्णुतिष्येषु पितृकरोत्तरेषु च अश्विनी वासवौष्णेषु सूनादितीन्दुभे तथा। वारे भानुशशुक्रे च जीवे शीतकरे तथा। लग्ने स्त्रीगोमीन-युग्मे कृष्यारम्भं शुभं विदुः। ऐशान्यां पुष्पनैवेद्यैः चेत्रपालञ्च पूजयेत्। सालङ्कारी हलधरः स्वग्मिव पूजितं हलम्। दध्याज्यमधुभिः श्रेष्ठं फालाग्रञ्च प्रलेपितम्। कर्षं प्रावर्त्तयेत् प्राच्यां नूतनेन हलेन च। हस्ताश्विनिष्यचन्द्रेषु प्रजेन्द्रविष्णुवारुणे। वायव्येन्द्राग्निभे चैव रोहिण्यामुत्तरासु च। वारे जीवशशुक्रे च सोमे दिनकरे तथा। युग्मे युवति गो मीने शस्तं स्याद्बीजवपनम्" ॥ राजमार्त्तण्डे। "प्राजेशत्र्यवणोत्तरादिति मघा मार्त्तण्डतिष्याश्विनी पौष्णानुष्णसरौचय' प्रतभिषा स्वातिर्विशाखा तथा। जीवार्केन्दुसितेन्दुनन्दनदिने वारे स्थिरस्योदये शस्यानां वपने भवन्ति लवने शस्ते तिथौ रोपणे"। देवलः। "गुरुसोमबुधशुक्राः चेष्याः सम्पत्कराः शुभाः। बुधार्किभूमिपुत्राच न भवन्ति फलप्रदाः। हन्ति मेषः पशून् सर्वान् स्वभावेनाथ वृश्चिकः। कर्कटे न भवेत् सौख्यं तुलाया न प्ररोहति। केशरी शस्यघाती स्यात् पार्थिवोपद्रवं

धनुः॥ मकरे चैव कुम्भे च भयमेव विनिर्दिशेत्। गोस्त्रीमन्मथमीनेषु शस्यं सम्पद्यते महत्॥ प्रशस्ते चन्द्रतारे च शुचिः शुक्लेन वाससा। स्नात्वा गन्धैश्च पुष्पैश्च पूजयित्वा विधानतः॥ पृथ्वीञ्च ग्रहसंयुक्तां पूजयित्वा प्रजापतिम्। अग्निं प्रदक्षिणीकृत्य दीयते भूरिदक्षिणा॥ कृष्णौ हृषौ नियोक्तव्यौ नवनीतैर्घृतेन वा। मुखपार्श्वे तयोर्लिम्पात् फालाग्रं कनकैः स्पृशेत्॥ उत्तराभिमुखो भूत्वा चोरेणार्घ्यं प्रदापयेत्। ततः शुभकरः श्रीमान् कृषिकर्म समाचरेत्॥ वर्जयेद्व्रण-शृङ्गञ्च खुरभग्नञ्च वर्जयेत्। विकलं छिन्नलाङ्गूलं कपिलं वृषभं तथा॥ हलप्रवाहणं कार्य्यं मौलभिः कृषिकर्मकैः। हलादिभिर्हृढैः क्षेमं कुहङ्केन शुभं वदेत्॥ वृषभा यदि मुह्यन्ति तस्य विघ्नप्रदा भवेत्"॥ कृषिरिति शेषः "तस्मात् सर्वप्रयत्नेन निर्विघ्नं कारयेत् सदा। एका जयकरी रेखा तृतीया चार्थदायिका॥ पञ्चमी या भवेद्रेखा बहुशस्यफला हि सा। अत ऊर्द्ध्वं न कर्त्तव्यं महादोषस्ततो भवेत्॥ संपूज्याग्निं द्विजं देवं कुर्य्याद्धलप्रवर्त्तनम्। हेमनिघृष्टफालाग्रं छिन्नरेखां न कारयेत्॥ स्मर्त्तव्या वासवेन्द्रः पृथूरामः सचन्द्रमाः। पराशरो बलभद्रः सर्वविघ्नोपशान्तये॥ हले प्रवाह्यमाने तु कूर्म्म उत्पद्यते यदि। अटहिणो म्रियते तस्य ततोऽन्यैव भयं भवेत्॥ लाङ्गलं भिद्यते चापि प्रभुस्तत्र विनश्यति। ईशाभङ्गो यदा कर्त्तुः संशयो जीवितस्य च॥ युतनाशो युगाभङ्गे समीने म्रियते सुतः"॥ समीने योक्तवन्धनकाष्ठद्वये। "योक्तच्छेदे तु व्याधिः शस्यहानिश्च जायते। हले प्रवाह्यमाने तु गोरेकः प्रपतेद् यदि॥ प्रपतेद्युक्तमात्रस्तु बन्धनं स प्रपद्यते। ज्वरातिसाररोगैश्च कृषिभङ्गं विनिर्दिशेत्॥ प्रवाहमुक्तमात्रस्तु ततो गोः प्रपतेत् यदि। मनुष्याणाम्टेम नर्दन्ति

ततो ग्रस्यं चतुर्गुणम्॥ हेमवारिविलिप्तस्य बीजस्योत्रयतः शुचिः। इन्द्रं चित्ते निधायाथ स्वयं मुष्टित्रयं वपेत्॥ कृत्वा धान्योन्यप्रोत्साहं नर्त्तको हृष्टमानसः। प्राङ्मुखः कलसं गृह्य इमं मन्त्रमुदीरयेत्॥ त्वं वै वसुन्धरे सीते बहुपुष्पफलप्रदे। नमस्ते मे शुभं नित्यं कार्यं सिद्धं शुभे कुरु॥ रोहन्तु सर्वशस्यानि काले देव प्रवर्षतु। कर्षकास्तु भवन्त्वग्रा धान्येन च धनेन च स्वाहा"॥ कल्पतरौ ब्रह्मपुराणम्। "चैत्रे च शुक्लपञ्चम्यां काश्मीरा च रजस्वला। नित्यं भवति तस्मात्तां ज्ञात्वा गोमयीं स्त्रियम्॥ अभ्यङ्गवस्त्रनैवेद्यैः पूजयेच्च दिनत्रयम्। पुष्पालङ्कारधूपैश्च गोरसं वर्जयन्ति च"॥ काश्मीरा पृथ्वी। "अष्टम्याञ्च ततः स्नाप्य ताभिरेव गृहे गृहे। सुस्नाताभिः प्रहृष्टाभिर्जीवपत्नीभिरेव च॥ अनन्तरं द्विजैः स्नाप्य सर्वौषधियुतैर्जलैः। गन्धैर्बीजैस्तथा रत्नैः फलैः सिद्धार्थकैस्तथा॥ स्नापयित्वा च तां देवीं गन्धमाल्यैश्च पूजयेत्। तन्निवेदितमिष्टन्तु भक्षितव्यं गृहे गृहे॥ अतःपरं स्नाता गर्भं गृह्णाति क्षतुमेदिनी"॥ तथा "ब्रह्मा विष्णुश्च रुद्रश्च वासवः सुरभीगृहे। इन्द्रः प्रचेताः पर्जन्यः शेषचन्द्रार्कवह्नयः॥ बलदेवे हलं भूमिर्वृषभं रामलक्ष्मणौ। रक्षोघ्नौ जानकी सीता युगं गगनमेव च"॥ सीता लाङ्गलपद्धतिः। युग युगकाष्ठम्। "एते द्वाविंशतिः प्रोक्ता प्रजानां पतयः शुभाः। गोमङ्गले तु संपूज्याः कृष्यारम्भे महोत्सवे॥ अर्घ्यैः पुष्पैश्च धूपैश्च माल्यै रत्नैः पृथक् पृथक्। हलेन वाहयेद्भूमिं स्वयं स्नातः स्वलङ्कृतः"॥ तथा। "कृषा बीजन्तु तत्रैव भोक्तव्यं बान्धवैः सह"॥ बीजवपनं प्राजापत्यतीर्थेन यथा हारीतः। "कनिष्ठायाः पश्चात् प्राजापत्यमावपनं होमतर्पणे प्राजापत्येन कुर्य्यात्" इति। राजमार्त्तण्डे। "नित्यं दश हले लक्ष्मीर्नित्यं पञ्च हले

धनम्। नित्यञ्च विपत्ते भक्तं नित्यमेकदले फलम्" ॥ होमसर्षपे लाजहोमसनकादितर्पणे पराशरः। "वैशाखे वपनं श्रेष्ठं मध्यमं रोहिणी रवौ। अतःपरं त्वधमं न जातु श्रावणे शुभम्" ॥ ज्योतिषे। "पूर्वभाद्रपदा मूलं रोहिण्युत्तरफल्गुनी। विशाखा शतभिषा चाथ धान्यानां रोपणे वरा ॥ अदोला दक्षिणी गोली पुत्रवित्तैर्वियुज्यते। स्वयं जाते पुनस्ते हि पालयन्नेव दुष्यति ॥ आरामे गृहमध्ये वा मोहात् सर्षपमावपन्। पराभवं रिपुर्याति सद्यो धनधनक्षयम् ॥ निशा गोली पलाशश्च चिञ्चा श्वेतापराजिता। कोविदारश्च सर्वत्र सर्वं निघ्नन्ति मङ्गलम्" ॥ निशा हरिद्रा। कोविदारको रक्तकाञ्चनः। "हिमाम्भसा हुतवीजं धात्रीं सम्यक् च रोपयेत्। वर्द्धेति रमेति पुष्पेति धनेति च ॥ नमस्ते शुभगे नित्यं द्रुमोऽयं वर्द्धतामिति। अरिष्टाशोकपुन्नागवकुलाम्रप्रियङ्गवः ॥ माङ्गल्याः पूर्वमारामे रोपणीया गृहेषु च। अश्वत्थमेकं पिचुमर्दमेकं द्वौ चम्पकौ त्रीणि च केशराणि ॥ तालाष्टकं श्रीफलसप्तकञ्च पञ्चाम्ररोपी नरकं न पश्येत्" ॥ दानसागरे देवीपुराणम्। "ये च पापा दुराचाराः श्रीवृक्षच्छेदकारिणः। रौरवादिनरके पच्यन्ते ब्रह्मणो दिनम् ॥ यत्रास्ते श्रीद्रुमानाम् प्रशस्तोऽसितो भुवि। तस्मिन् देशे भयं नित्यं राजानो न चिरायुषः। न च वन्दस्य कर्त्ता यत्र श्रीफलभेदिनः" ॥ श्रीवृक्षविन्यासः। "त्रिविधामलकं चापि सम्यग्गम्येषु रोपयेत्। न व्याधिकीटविध्वंसो भयं तत्र भवेत् क्वचित् ॥ सिद्धिः [illegible] वर्धितं मे श्रीमदामभक्तपादाः कुशलिनः [illegible] रावां मध्ये [illegible] चतुर्थं [illegible] श्रीमद्भूमामात्रापयन्ति [illegible]

भोऽम्भोगान्धीदतीपाण्डरसुण्डीधूलो मुद्गारतस्याक्षयरा कृता-फड़िङ्गा एलावानरा गड़ड़ा दमडुकमहिषादिरोगम्। खण्ड-यतद्यणमपि विलम्बं माचरतः विलम्बं कारयत तदा युष्मान् मतखण्डं कारयामीति। भ्रां भ्रीं भ्रौं श्रीरामाय नमः"॥ इति शस्येषु बध्नयेत्।

अथ मुष्टिग्रहणम्। दीपिकायाम् "याम्याजपादाश्वि-धनानलतोयशक्रचित्रेतरेषु कुजार्कजवारवर्जम्। शस्तेन्दु-योगकरणेषु तिथौ विरिक्ते धान्यच्छिदिः स्थिरनरस्त्रमृगोदयेषु"॥ बलभद्रः। "रेवतीहस्तमूलेषु श्रवणे नागयाम्ययोः। पितृ-दैवे तथा सौम्ये धान्यच्छेदं मृगोदये"॥

अथ धान्यच्छेदनप्रकारः। "सप्तौ मासमुहौ च यवधान्ये सुधाण्डके। छिन्द्यात्तिलञ्च निष्पन्नमेतत् पाराशरं मतम्"॥ पराशरः। "न मुष्टिग्रहणं कुर्यात् कदाचिद्वटपौषयोः। ईशाने लवनं कुर्यात् सार्द्धमुष्टिद्वयं शुचिः॥ पौष्णे पुष्ये शुभाहे वा पूजयित्वेष्टदेवताम्। शस्यविघ्नप्रशान्त्यर्थं खेलं वा द्रव्यभोज-नम्"॥ बौधायनः। "वयाखगजाधान्यानां गवां चैव रजः शुभम्। अशुभं तत् समूहिन्याः श्वाजाविखरवायसाम्"॥ समूहिनी संमार्जनी। कल्पचिन्तामणौ मेधिरोपणम्। "वटश्च सप्तपर्णश्च गम्भारी शाल्मली तथा। औडुम्बरी तथा धात्री या चान्या क्षीरधारिणी॥ सौभाग्यौ कर्पकैर्नित्यं मेधिः कार्य्या फलप्रदा"॥

अथ बीजसञ्चयः। "हस्ता चित्रादितिस्वाती रेवत्यां श्रवणद्वये। स्थिरे लग्ने गुरौ शुक्रे बीजं धार्य्यं शुभावहे॥ माघे वा फाल्गुने वापि सर्व्वबीजानि संग्रहेत्। शोषयेत्तापयेद्रौद्रे रात्रौ चोपनिधापयेत्॥ ततश्च पुटिकां बद्धा शोषयेच्च पुनः पुनः। स्थापयेच्च प्रयत्नेन यथा भूमिञ्च न स्पृशेत्॥ दीपा-

ग्निना च संसृष्टं दृष्ट्या चोपहतञ्च यत्। वर्जनीयं तथा वीजं यत् स्यात् कीटसमन्वितम्॥ याम्याग्निरुद्राहि विशाखपूर्वा-माहेन्द्रपित्रेतरभैः शुभाहे। धान्यादिसंस्थापनमेषु शस्तं मृगस्थिरद्वाङ्गघटेशोदयेषु॥ सौम्यादितिमघा ज्येष्ठानुत्तरेषु च कारयेत्। मीने लग्ने शुभे चन्द्रे निधनक्रूरवर्जिते॥ लेख्यं कोष्ठके धान्यं गर्गो वदति सर्वदा। धनदाय सर्वलोकहिताय देहि मे धान्यं स्वाहा। नम ईहायै ईहादेवी सर्वलोकवि-वर्द्धिनी कामरूपिणि धान्यं देहि स्वाहा। लेखयित्वा इमं मन्त्रं धान्यागारे विनिक्षिपेत्"॥ पुराणसर्वस्वे। "मन्त्रं लिखित्वा पत्रे च मध्ये धान्यस्य धारयेत्। पश्चाच्च धान्यराशेस्तु मूषिकादिनिवृत्तये॥ दक्षिणदिग्गमनं स्यादभिनवासु नारीषु। व्ययमपि शस्यफलानां न बुधो बुधवासरे कुर्य्यात्॥ त्रिपूत्तरे रेवत्यां धनिष्ठा वारुणेषु च। एतेषु षट्सु विज्ञेयं धान्यनिष्क्रमणं बुधैः॥ श्रवणाश्च विशाखा ध्रुवपौष्णपुनर्व-सुनि पुष्यञ्च। चभिन्यञ्च ज्येष्ठा धनधान्यविवर्द्धिनी कथिता"॥ धान्यादिस्थापनम्। "कुम्भमासेऽपि सर्वेषां मन्दिराणामुप-क्रमम्। महर्षयः प्रशंसन्ति धान्यागारं विशाय च"॥ अत्र प्रयोगः। पौर्णमास्यन्तचैत्रीकृष्णपञ्चम्यां पृथ्वी रजस्वला तां दिनत्रयमेकस्मिन् पर्व्वताकारे उन्नतदेशे सधवाः स्त्रियः प्रपूजये-युरष्टम्यां तां स्नापयित्वा ताः पूजयेयुः। ततः शुभदिने वीज-वपनदिने वा सर्व्वौषधिगन्धवीजरत्नफलश्वेतसर्षपैः पृथ्वीं स्नाप-यित्वा गन्धादिभिः पूजयेत्। नैवेद्यमेपञ्च पयःशोलाव्यम्। अथ हलप्रवाहदिने वीजवपनदिने च कृतस्नानादिराचान्तो गर्त्तं चैत्रे कृत्वा जलेनापूर्य्य तत्र प्रजापतिं सूर्य्यादिनवग्रहान् पृथ्वीञ्च पूजयेत्। "हिरण्यगर्भे वसुधे शेषस्योपरिशायिनि। वसाम्यहं तव पृष्ठे गृहार्थाय्यं धरस्व मे"॥ इति मन्त्रेण

क्षीरेणार्घ्यं दद्यात्। ऐशान्यां पुष्पनैवेद्यैः प्रणवादिनमोऽन्तेन ब्रह्मणे नमः नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहा इत्यनेन त्रिःपूजयेत्। रुद्राय कश्यपाय सरस्वत्यै इन्द्राय तदर्घ्यमन्त्रस्तु। "शक्रः सुरपतिः श्रेष्ठो वज्रहस्तो महाबलः। शतयज्ञाधिपो देव तुभ्यमिन्द्राय वै नमः" ॥ प्रचेतसे पर्जन्याय मेघाय चन्द्राय धर्माय वह्नये बलदेवाय हलाय भूमये वृषभाय रामाय लक्ष्मणाय जानक्यै सीतायै स्वर्गाय गगनाय इति द्वाविंशति पूजयेत् क्षेत्रपालमग्निं दिशश्च पूजयेत्। अग्निं प्रदक्षिणीकृत्य ब्राह्मणाय दक्षिणां दद्यात्। आम्रपल्लवौदनदधीनि गर्त्ते निक्षिप्य मृत्तिकाभिः पूरयेत् कष्टौ हयौ नवनीतेघृतेन वा मुखपार्श्वयोर्निक्षिपेत्। हलप्रवाहकान् गन्धादिना भूषयित्वा हलं माल्यादिभिः पूजयित्वा दधिघृतमध्वुभिः फालाग्रं प्रक्षिप्य हेम्ना फालाग्रं घर्षयित्वा कर्षयेत् वस्निन्द्रयुरामिन्दु पराग्रवलभद्रान् स्मरेत्। एका तिस्रः पञ्च रेखा हलेन कार्य्याः भग्नशृङ्गखुरलाङ्गूलाः कपिलाश्च वृषा न योक्तव्या हलप्रवाहकाश्च समर्थाः कर्त्तव्याः हलानि नवानि दृढ़ानि कर्त्तव्यानि वृषभयुद्धादिकं न शुभदं वृषभाणां मर्द्दनेन चतुर्गुणं शस्य मूत्रपुरीषोत्सर्गे तथा। बीजवपने त्रिदशमधिकं सुवर्णजलसंयुक्तं बीजमुष्टित्रयम् इन्द्रं ध्यायन् स्वयं प्राजापत्येन तीर्थेन वपेत् अभयत्रैव प्राङ्मुखः जलपूर्णकलसं गृहीत्वा "त्वं वै वसुन्धरे सीते बहुपुष्पफलप्रदे। नमस्ते मे शुभं नित्यं कृषिं मेधां शुभे कुरु ॥ रोहन्तु सर्वशस्यानि काले देवः प्रवर्षतु। कर्षकास्तु भवन्त्वग्र्या धान्येन च धनेन च" स्वाहेति प्रार्थयेत्।

अथ षष्टिसंवत्सरगणना। "शकेन्द्रकालः पृथगाकृति २२। घ्नः शशाङ्कनन्दाश्वियुगैः ४२८१ समेतः। शराद्रिवसिन्दु

१८७५। हृत सलब्ध षष्ठ्यावशिष्टा प्रभवादयोऽब्दा । वर्षं वर्जन्तु यच्छेष सूर्य्यैं सपूर्य्य खोर्मिभि । ६०। हृत व्युत्क्रमत खाग्निहृतेऽशि मासकादय" ॥ अस्यार्थं । शाकेन्द्रकाल शक राजाब्दकाल पृथक आक्कतिघ्न २२। द्वाविंशत्या पूरित शशाङ्कनन्दाश्वियुगैरकनवत्यधिकशतद्वयाधिकचतु सहस्रै सम तोऽङ्क शराद्रिवसुखेन्दुहृत पञ्चसप्तत्यधिकाष्टादशशतैर्यावत् सङ्ख्य हर्तुं शक्नोति तावता हृत कर्त्तव्य सलब्ध पूर्वंशकाब्द शरेत्यादिना लब्धसंख्यया युत कार्य्यं षष्ट्यासमेपि षष्ट्यादेपोऽङ्क पूर्ववत् षष्ट्याहृतलब्धस्यावशिष्टे प्रभवादय एकावशेषे प्रभव द्वयावशिष्टे विभवादि वर्षवर्जन्तु यच्छेष वर्षातिरिक्त शरा द्रिवसुखेन्दुहृतावशिष्ट तत् सूर्य्यैर्द्वादशभि सपूर्य्य खोर्मभि षष्ट्याहृते व्युत्क्रमत इत्यनेन षष्टिहृतावशिष्टा षड्भ्रा दण्डा षष्टिहृतलब्धाशके खाग्निहृते त्रिंशता हृतेऽवशिष्टा अशका लब्धा मासा स्युरिति। प्रभवादि वर्षाण्युपक्रम्य "आद्या तु विंशतिर्ब्राह्मी द्वितीया वैष्णवी स्मृता। तृतीया रुद्रदैवत्या श्रेष्ठा मध्याधमा भवेत्" ॥ भविष्यपुराणे भैरव उवाच। "वत्स्यन्द कथयाम्यत्र क्रूरा सौम्याश्च ये प्रिये। संवत्सरफल मुख्य प्रभवादौ वरानने ॥ बहुतोयास्तथा मेघा बहुशस्या च मादनी । बहुक्षीरास्तथा गावो व्याधिरागविवर्जिता ॥ प्रशान्ता पार्थिवाश्चैव प्रभवे परिकीर्त्तिता । १। "सुभिक्ष क्षेममारोग्य सर्वे व्याधिविवर्जिता । प्रशान्ता मानवास्तत्र बहुशस्या वसुन्धरा । हृष्टास्तुष्टा जना सर्वे विभवे च वरा नन"। २। "रोगा बहुविधाश्चैव मनुष्या वाजिकुञ्जरा । सर्व एव प्रनश्यन्ति शुक्ले वर्षे वरानने" । ३। "उत्सवश्च जगत् सर्वं धनधान्यसमाकुलम्। नित्योत्सव प्रजावृद्धि प्रमोदे जायते प्रिये"। ४। "नीरोगाश्च निराबाधा मानवा विगतद्विप ।

बहुचौरास्तथा गाव: प्राजापत्ये वरानने"। ५। "निरातङ्कं जगत् सर्वं धनयौवनगर्वितम्। अङ्गिरसि प्रजाः सर्वा नित्योत्साहा वरानने"। ६। "सुभिक्षं क्षेममारोग्यं वर्षाकालं सुशोभनम्। श्रयहर्षिं विजानीयात् श्रीमुखे सुरवन्दिते"। ७। "बहुचौरास्तथा गावो धान्यञ्च बलवत्तरम्। जायन्ते सर्वशस्यानि भावे वर्षे वरानने"। ८। महार्घं जायते सर्वं घृततैलरसादिकम्। प्रजानाञ्च भवेद्वृद्धिर्युंनिसवत्सरे शुभे। ९। "निष्पत्तिः सर्वशस्यानां मध्या धातरि कीर्त्तिता। इक्षुचौरगुडादीनां प्रबलत्वं वरानने"॥ १०। "सुभिक्षं क्षेममारोग्यं कार्पासस्य महार्घता। लवणं मधुगव्यञ्च ईश्वरे दुर्लभं प्रिये"। ११। "सुभिक्षं क्षेममारोग्यं प्रशान्ताः पार्थिवाः प्रिये। तस्करोपहृतं वित्तं बहुधान्ये वरानने"॥ १२। "राष्ट्रभङ्गश्च दुर्भिक्षं तस्करैश्चोपपीडनम्। जानीयाद्विपदं घोरं प्रमाथिनि वरानने"। १३। "जायन्ते सर्वशस्यानि मेदिनी निरुपद्रवा। लवणं मधुगव्यञ्च महार्घं विक्रमे प्रिये"॥ १४। "कोद्रवाः शालिमुद्गाश्च मसुमाषास्तथैव च। महार्घं जायते सर्वं वृषे च सुरवन्दिते"। १५। "चनकामुद्गमाषाश्च अन्यच्च विदलं प्रिये। महार्घं जायते सर्वं चित्रभानौ वरानने"। १६। "सुभिक्षं क्षेममारोग्यं विश्वञ्च निरुपद्रवम्। व्यवहारी भवेत् हृष्टः स्वर्भानौ देवपूजिते"। १७। "अतिवृष्टिश्च जायेत धान्यस्याथ प्रपीडनम्। शस्यं भवति सामान्यं दारुणे सुरवन्दिते"। १८। "बहुशस्यानि जायन्ते सर्वदेशे सुलोचने। सौराष्ट्रे लाटदेशे च पार्थिवे नात्र संशयः"। १९। "दुर्भिक्षं जायते घोरं सर्वोपद्रवसंयुतम्। अनावृष्टिः समाख्याता व्यये मवत्सरे प्रिये"। २०। "उद्यतो वर्षणे मेघो जलं नैवोपजायते। महार्घं सर्वजिद्वर्षे सर्वमेव वरानने"। २१। "कोद्रवाः शालि-

शूद्राश्च कङ्कमापास्तथैव च। सुलभं जायते सुस्थं जगद्वै सर्वधारिणि"। २२। "मनग्निप्रवला लोका धान्यौषधिप्रपीडनम्। जायते मानुषे कष्टं विरोधिनि न संशयः"। २३। "सर्वाः प्रजाः प्रपीड्यन्ते व्याधिः शोकश्च जायते। शिरोवक्षोऽक्षिरोगाश्च पापाद्वि विकृते जनाः"। २४। "उपद्रुतं जगत् सर्वं तस्करैर्मूषिकैः खगैः। पीड़िताश्च प्रजाः सर्वाः देशभङ्गा खरे प्रिये"। २५। सुभिक्षं क्षेममारोग्यं शस्यं भवति शोभनम्। बहुक्षीरास्तथा गावो नन्दने नन्दने प्रिये"। २६। "अल्पतोयास्तथा मेघा वर्षन्ति खण्डमण्डले। नश्यन्ति सर्वशस्यानि विजये नात्र संशयः"। २७। "क्षत्रियाश्च तथा वैश्याः शूद्राश्च नटनर्त्तकाः। पीडितास्ते वरारोहे जये सर्वे न संशयः"।२८। "सरोगश्च तथा देवि दाहज्वरसमन्वितम्। अभिभूतं जगत् सर्वं मन्मथे सुरवन्दिते"। २९। "औषधान्यक्षयो देवि सर्वशस्यमहार्घता। व्यवहाराश्च नश्यन्ति दुर्मुखे दुःसुखाः प्रजाः"॥ ३०। "पीड्यन्ते सर्वशस्यानि देशे देशे शुचिस्मिते। हेमलम्बे प्रजाः सर्वाः पीड्यन्ते नात्र संशयः"। ३१। "तस्करैः पार्थिवैश्चैव अभिभूतमिदं जगत्। अर्घो भवति सामान्यो विलम्बे भयं महत्"। ३२। "विषमस्थं जगत् सर्वं विरोधे भयसम्भवम्। विकारी सर्वतोपायी मम वाक्यन्तु नान्यथा"।३३। "क्वचिद्वर्षति पर्जन्यो देशे संच्छिन्नमण्डलः। दुर्भिक्षं सर्वरीवर्षे व्यवहारो विपर्य्ययः"। ३४। "दुर्भिक्षं जायते सर्वा मेदिनी दुष्यति प्रिये। प्लवे प्लवन्ति तोयानि पीडिता मानवा भुवि"। ३५। "सुवर्णरूप्यधान्यानि जगत् सर्वं सुशोभनम्। ब्राह्मणा वणिजस्तुष्टाः सुभिक्षे शुभकृत् प्रिये"। ३६। "सुभिक्षं क्षेममारोग्यं वसा गोब्राह्मणाः प्रिये। सुखिताः शोभने वर्षे प्रजाः सर्वाः सुलोचने"। ३७। "विषमस्थे जगत् सर्वे व्याकुलं सम्-

दाहृतम्। जनानां जायते भद्रे क्रोधे क्रोधः परस्परम्" ।३८। "सर्वत्र जायते क्षेमं सर्वशस्यमहार्घता। विश्वावसौ वरारोहे कार्पासस्य महार्घता"। ३९। "पार्थिवैर्नृपसैन्यैश्च समस्तैः खण्डमण्डले। प्रपीड्यन्ते जनाः सर्वाः भयभीताः पराभवे"। ४०। "तृणधान्यानि पीड्यन्ते श्रीष्मे वर्षति वासवः। प्लवङ्गे पीड़िताः सर्वाः प्रजाश्च सुरवन्दिते"। ४१। "जायन्ते सर्वशस्यानि सुभिक्षं निरुपद्रवम्। सौम्यदृष्टिर्भवेद्राजा कीलके च शुभं वदेत्"। ४२। "सुभिक्षं क्षेममारोग्य सुखञ्च निरुपद्रवम्। सौम्यदृष्टिर्भवेद्राजा सौम्ये सौख्यं प्रकीर्त्तितम्"।४३। "तोयपूर्णो भवेन्मेघो वर्षते च दिने दिने। निरुपद्रवाश्च राजानः सर्वसाधारणे प्रिये"। ४४। "वासवो वर्षते देवि! देशे चाखण्डमण्डले। भज्यन्ते कान्यकुब्जे विरोधिकृद्विनाशकृत्"। ४५। "अभिभूतं जगत् सर्वं रोगैर्बहुविधैः प्रिये। मारुतैः फलदाश्चैव परिधाविनि शोभने"। ४६। "निष्पत्तिः सर्वशस्यानां सुभिक्षं भवति प्रिये। प्रमाथिनि जलोद्गारी जलदो मोदते प्रजाः"। ४७। "निष्पत्तिः सर्वशस्यानां सर्वशस्यमहार्घता। घृतं तैलसमं याति चानन्दे नन्दिनि प्रजाः"। ४८। "कोद्रवाः शालिमुद्गाश्च पीड्यन्ते वरवर्णिनि। सर्वौषधीनि धान्यानि राक्षसे निष्ठुराः प्रजाः"। ४९। "दुर्भिक्षं जायते घोर धान्यौषधिप्रपीडनम्। अनले च समाख्यातं गात्र कार्य्या विचारणा"। ५०। "देशभङ्गः सुदुर्भिक्षं समासात् कथयाम्यहम्। पिङ्गले चारुपद्माक्षि दुर्भिक्षं नर्मदातटे"। ५१। "गोमहिष्यो विनश्यन्ति ये चान्ये भटमर्त्तकाः। वासवो वर्षते देवि शस्यञ्च न हि जायते"॥ "तिलसर्षपमाषादिकार्पासानां महार्घता। गोमहिष्यः सुवर्णानि कांस्यताम्रादिशेषतः॥ तत् सर्वं देवि विक्रीय कर्त्तव्यो धान्यसञ्चयः। तेन

धान्येन लोकोऽय मिस्तरिष्यति दुर्दिनम्॥ पार्थिवामोपका दीना कालयुक्ते प्रपीडिता"।५२। "तोयपूर्णा स्मृता मेघा बहुशस्या च मेदिनी। निष्ठुरा पार्थिवा देवि सिद्धार्थे च वरानने ।५३।'चल्पतोयघनाश्चैव कीटका प्रबला स्मृता। विरुद्धा पार्थिवा देवि रौद्रे संवत्सरे प्रिये"।५४। "दुर्भिक्ष मध्यम प्रोक्त व्यवहारो न वर्त्तते। भवेद्दै मध्यमा वृष्टिर्दुर्मतौ समुपस्थिते"।५५। "दुर्भिक्ष जायते लोका सर्वे द्रविण वर्जिता। प्राणिना जायते क्षयो दुन्दुभौ वरवर्णिनि"।५६। "महिषीगोहिरण्यादितास्त्रकाद्यायेपत। तत् सर्वं देवि विक्रीय कर्त्तव्यो धान्यसञ्चय॥ रक्ते संवत्सरे देवि क्रूरबुद्धि नेराधिप। मानवा क्रूरचेष्टाश्च सग्रामे रुधिर भवेत्"।५७। "दुर्भिक्ष मरण घोर धान्यौषधिप्रपीडनम्। पापरोगी भवे द्देवि रक्ताक्षेऽरवर्णिनि'।५८। "रोगो मरणदुर्भिक्ष विरोधीत्तरसङ्कुलम्। क्रोधे तु विषम सर्वं समाख्यात हर प्रिये"।५९। "मेदिनी लभते देवि सर्वभूत चराचरम्। देशभङ्गश्च दुर्भिक्ष क्षये सचीयते प्रजा॥ सौराष्ट्रे मालवे देशे दक्षिणे कोङ्कने तथा। दुर्भिक्ष जायते घोर क्षये संवत्सरे प्रिये॥ कौमुदी नर्मदायाश्च यमुना नर्मदातटम्। विन्ध्याया सैन्धवश्चापि विनश्यति न सशय॥ सिंहल मध्यदेशश्च कालञ्जर तथैव च। क्षये क्षयन्ति सर्वाणि नान्यथा वर वर्णिनि"।६०। वराहसंहितायाम् "नक्षत्रेण सहोदयमस्त वा याति येन सुरराजमन्त्री।" तत्सञ्ज्ञ कर्त्तव्य वर्षं मासक्रमे णैव। वर्षाणि कार्त्तिकादीनि चाग्नेयाद्भद्दयानुयोगीनि क्रम शस्त्रिभञ्च पञ्चममन्त्यमुपान्त्यश्च विज्ञेय नक्षत्रेण गुरुभुज्यमान नक्षत्रेण। चाग्नेय कृत्तिका पञ्चम फाल्गुन वर्षम् अन्त्यमा श्विनम् उपान्त्य भाद्रम्। अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गु

नव विभो मतः। शेषा मासादिमा ज्ञेया कृत्तिकादिव्यवस्थया। द्वे द्वे चित्रादितारणां पूर्णपर्वेन्दुसङ्गते। समावेवाद्यौ ज्ञेया त्रिभिः षष्ठान्त्यसप्तमाः" इति सद्वर्षकाण्डात्। पूर्णपर्वेन्दुसङ्गते पौर्णमासीयुते द्वे द्वे तारे तदेकवाक्यतया पूर्ववचने पौर्णमासी लाभः। यथा मासानां पौर्णमास्यां कृत्तिकादिसम्बन्धात् कार्त्तिकादित्वं तथा वर्षाणामपि गुरोः कृत्तिकादावस्तोदयसम्बन्धात् कार्त्तिकादित्वं तेन कृत्तिका रोहिण्योरेकतरस्मिन् गुरोः रस्तोदयेऽन्यतरलाभे कार्त्तिकं वर्षम् एवं मार्गशीर्षादि। अत्र वर्षद्वयघटकयोर्नक्षत्रयोरेकतरस्मिन्नस्तं गतो गुरुरन्यतरस्मिन्नुदेति तत्र का गतिरिति चेत् कार्त्तिकोत्तरं मार्गशीर्षं ततः पौषमित्यादिक्रमाद्गतिरिति। फलानि च। शकटानलोपजीविकपीडा व्याधिशोकः वृद्धिस्तु रक्तपीतककुसुमाना कार्त्तिके वर्षे ॥ १ ॥ "सौम्येऽब्देऽनावृष्टिर्मृगाखुशलभाण्डजैश्च शस्यनाशः। व्याधिभयं मित्रैरपि भूपानां जायते वैरम्" ॥ २ ॥ "शुभकृज्जगतः पौषो निवृत्तवैराः परस्परं भूपाः। द्वित्रिगुणो धान्यार्घः पौष्टिककर्मप्रसिद्धिः" ॥ ३ ॥ "पितृपूजापरिवृद्धिर्माघे हार्दञ्च सर्वभूतानाम्। आरोग्यवृष्टिधान्यार्घसम्पदो मित्रलाभश्च" ॥ ४ ॥ "फाल्गुने वर्षे विद्यात् क्वचित् क्वचित् क्षेमवृष्ट्यादिशस्यानि। दौर्भाग्यं प्रमदानां प्रबलाश्चौरा नृपाश्चोग्राः" ॥ ५ ॥ "चैत्रे मन्दा वृष्टिः प्रियमन्नं क्षेममवनिपा मृदवः। वृद्धिश्च कोषधान्यस्य भवति पीडा च रूपवताम्" ॥ ६ ॥ "वैशाखे विगतभया धर्मपराः प्रमुदिताः प्रजाः सनृपाः। यज्ञक्रियाप्रवृत्तिर्निष्पत्तिः सर्वशस्यानाम्" ॥ ७ ॥ "ज्यैष्ठे जातिकुलधर्मश्रेणी श्रेष्ठा नृपाः स्वधर्मज्ञाः। पीड्यन्ते धान्यानि च हित्वा कङ्गुशमीजानि" ॥ ८ ॥ "आषाढे जायन्ते शस्यानि क्वचित् वृष्टिरन्यत्र। योग-

क्षेमं मध्यं शस्यव्यया भवन्ति भूपाः" ॥ ९ ॥ "श्रावणे वर्षे क्षेमं शस्यानि पाकमुपयान्ति। क्षुद्रा ये पार्थिवास्ते पीड्यन्ते ये च तद्भक्ताः" ॥ १० ॥ "भाद्रपदे वल्लीजं निष्पत्तिं याति सर्वशस्यञ्च। न भवत्यपरं शस्यं क्वचित् सुभिक्षं क्वचिच्च दुर्भिक्षम्" ॥ ११ ॥ "आश्वयुजेऽप्यजस्रं पतति जलं प्रमुदिताः प्रजाः क्षेमम्। प्राणचयः प्राणभृतां सर्वेषामर्थबाहुल्यम्" ॥ "रुद्रमैत्राङ्कतिथ्यद्रिविश्वदेवोनविंशतिः। ११। १७। ९। १५। ७। १३। १९। सप्तभिः शेषितच्छाकात् क्रमाद्वर्षादिकं वदेत्। वर्षा धान्यं तृणञ्चैव शीतं घर्मं समीरणम्। प्रजावृद्धिं तत्क्षयञ्च राजविग्रहमेव च" ॥ रुद्रमैत्राङ्कतिथ्यद्रिविश्वदेवोनविंशतिः। एकादशसप्तदशनवपञ्चदशसप्तत्रयोदशोनविंशतयः। तत्र सप्तभिर्हृते शकाब्दे एकावशेषे तद्वर्षे रुद्रसंख्या वर्षा मैत्रसंख्यं धान्यमित्यादि। मालान्यायेन रुद्रमैत्राभ्यां क्षयविग्रहौ ज्ञेयौ। एवं द्व्यवशेषे मैत्रसंख्या वर्षादि। एवमन्यत्र। "जीवार्कबुधमन्दारकाव्यचन्द्रमसः क्रमात्। राजा मन्त्री जलाधीशः शस्यपोऽद्रिहृतात् शकात्" ॥ अत्रापि मालान्यायेन सप्तहृतशकाब्दे एकावशेषे जीवो राजा अर्को मन्त्री बुधो वर्षाधिपः शनिः शस्याधिपः द्व्यवशेषे रव्यादिरेवमन्यत्र। राजफले शौनकः मार्त्तण्डे। "परिशोषमेति सलिलं सोमे पयो विस्तरं क्षौणीजेऽपि च वर्षणं कथमपि ज्ञे च प्रभूतं पयः। पृथ्वी शस्यवती गुरौ भृगुसुते शस्यञ्च नानाविधं मन्दे प्राणिकबन्धशङ्खबला वर्षाधिपे निश्चितम्। लग्नेशो जन्मराशीशो यस्मिन् वर्षे नृपो भवेत्। उच्चस्थो वा हर्षितो वा क्रूरोऽपि शुभमादिशेत्। त्रिषु ते शाकवर्षे तु चतुर्भिः शेषिते क्रमात् ॥ आवर्त्तं विद्धि संवर्त्तं पुष्करं द्रोणमम्बुदम्। आवर्त्तो निर्जलो मेघः संवर्त्तश्च बहूदकः ॥ पुष्करो दुष्करजलो द्रोणः शस्य-

प्रपूरकः। पूर्वाषाढ़ां गतो भानुर्जीमूतैर्यदि दृश्यते। तदा त्रयोदशाहानि मिथुनादिषु वर्षति" ॥ भुजवलभीमे। "व्रजति यदि कुजः पतङ्गमार्गे घट इव भिन्नतलो जलं ददाति अथ भवति दिवाकराग्रतश्चेत् प्रलयघनानपि शोषयत्यवश्यम्। यावन्मार्त्तण्डसूनुश्चरति धनुरयो मन्मथं मीनकन्ये तावद् भिक्ष-पीडा भवति च मरणं क्षुत्पिपासादिघोरम् उर्वी निस्तृण-शष्पाग्रवधिरपटले नर्त्तयन्ते पिशाचाः ग्रामाः शून्या भवेयुर्नर-पतिरहिता छस्थिकङ्कालमाला। वक्रं करोति रविजो धरणी-सुतो वा मूलर्क्षहस्तमघरेवतिमैत्रभेषु। कल्पोपभङ्गपतनादि च वैनिकानां सर्वत्र लोकमरणं जलधौतदेशः। यदा च सौरिः सुरराजमन्त्रिणा समेत्य तिष्ठेत् क्वचिदृक्षमण्डले। तदा-ङ्गवङ्गाम्बुककोशलेषु विभागशेषां कुरुते वसुन्धराम्। तिष्ठेतां यावदेकर्क्षे वाक्पत्यवनिजौ यदे। तावत् सुद्रोगसंग्रामात् प्रजानां क्षयमादिशेत्। आरभ्य शुक्लप्रतिपत्तिथि मार्गात्तु चैवकं गर्भानीहारजलदैरिति प्रावृट्परीक्षणम्। यन्नक्षत्रं गतवति विधौ जायते तत्र गर्भः पश्चाद्धासवतिशतकै चाह्नि तस्य प्रसूतिः" ॥ वराहः। "पञ्चम्यादिषु पञ्चसु कुम्भेऽर्कं यदि भवति रोहिणीयोगः। अधमतमाधममध्यममतिमहदु-भ्मसां पातः। प्रतिपदि मधुमासे भानुवारः सितायां यदि भवति तदा स्यान्निर्जला वृष्टिरब्दे। अविरतजलधारासान्द्र-विन्दुप्रवाहैर्धरणितलमशेषं व्याप्यते सोमवारे। अवनितनय-वारे वारिवृष्टिर्न सम्यक् बुधगुरुसितवारे शस्यमम्यत् प्रमोदः। जलनिधिरपि सौरे शुष्यते क्वाम्बुवृष्टिः सकलमिदमुदारेणाम्बु-वेदां पृथिव्याम्। आषाढ्यां पौर्णमास्यां सुरपतिककुभोवा-तिवातः सुवृष्टिम्। शस्यध्वंसं प्रकुर्यादिह दहनदिशो मन्द-वृष्टिर्यमेन। नैरृत्यां निष्फला स्यात् वरुणबहुजलो वायुना

वायुकोपः कौवेर्यां शस्यपूर्णा भवति वसुदिता मेदिनी शम्भु-
नापि। रवेः कर्कटसंक्रान्तौ द्रेक्काणत्रयभेदतः। आदिमध्या-
न्तभेदेन वर्षायाः कालनिर्णयः। त्रिंशद्योजनविस्तीर्णं
शतयोजनमायतम्। आढकस्य प्रमाणन्तु मुनिभिः परि-
कीर्त्तितम्। युग्माजगोमीनगते शशाङ्के रविर्यदा कर्कटकं
प्रयाति। जलं शताढ़ं हरिकार्मुकेऽर्द्धं वदन्ति कन्या मृग-
योरशीतिम्। कुलीरकुम्भालि तुले शताढ़े षड्भिश्च युक्तां
नवतिं वदन्ति। समुद्रे दशभागाः स्युः षड्भागाश्चापि पर्वते।
पृथिव्यां चतुरो भागान् सदा वर्षति वासवः। दशादिभिस्तु
भागाद्यैः पूरयित्वा शतादिकम्। विंशत्या द्वारतश्चाढ़काः
समुद्रादौ प्रकीर्त्तिताः”। यदा। १००। तदा स ५० प ३० पृ २०
यदा ५० स २५ प १५ पृ १० यदा ८० स ४० प २४ पृ १६
यदा ८६ स ४८ प २८ रेखात्रयम्। पृ १८। रेखैका एव-
माढका ज्ञेयाः। सार्द्धदिनद्वयं कृत्वा पौषे पौषादिना बुधः।
गणयेत् कालिकीं वृष्टिमवृष्टिं वानिलक्रमात्। मतान्तरञ्च
चापे च मीने परिवृत्तभानौ। ज्येष्ठे शुचौ कर्कटके च सिंहे
कन्यातुलायां मकरे च कुम्भे मार्गे स्वयं शुध्यति पौषमाघः।
शुचेर्निशांशे प्रथमेऽतिवृष्टिः शस्यानि सर्वाण्युपयान्ति सिद्धिम्।
पाद्ये द्वितीये तिलमुद्गमाषा भागे तृतीये खलु शारदानि।
चित्रास्वातीविशाखासु ज्यैष्ठे मासि निरभ्रता। तास्वेव श्रावणे
मासि यदि वर्षति वर्षति। शुचौ शुक्ले नवम्याञ्चेत् उदेत्यर्को
निरभ्रकः। परिवेशो मध्यदिने चास्तं यातो घनावृतः। वयं
द्विकमथैकं वा वृष्टिमिष्टां समादिशेत्। अश्लेषायां गतो भानु-
र्यदि वृष्टिं न मुञ्चति। मघापञ्चकमासाद्य करोत्येकार्णवां
महीम्। चतुर्थ्यां कर्कटस्यार्के वृष्टिर्जानपदे यदि। विफलाः
सर्वसंक्लेशाः कर्षकाणां भवन्ति च। दृष्टे द्युभागे प्रथमे सुवृष्टि-

र्भवेत् द्वितीये तिलकीटसर्पाः। दृष्टिस्तु मध्यापरभागदृष्टे-र्निष्फिद्रदृष्टिस्तु निशाप्रवृत्ते। स्वातीमघेन्द्रकद्रेषु प्राजापत्यो-त्तरासु च। सञ्चरन् जलदान् हन्ति भौमः संवर्त्तकानपि। चित्रां गते भृगौ जीवे सौरियुक्तेऽम्बुवर्षणम्। शुभाशुभसिंह-कुजे शोषं याति महाघनः। पापयर्गशुभायुत तुलाश्रके महार्घता। प्रावृषि शीतकरो भृगुपुत्रात् सप्तमराशिगतः शुभदृष्टः। सूर्यसुतासवपञ्चमगो वा सप्तमगश्च जलागमनाय। श्रीपतिव्यवहारनिर्णये। "माघे मासि च सप्तम्यां पञ्चम्यां फाल्गुनस्य च। चैत्रस्य तृतीयायां वैशाखप्रथमेऽहनि मेघस्य गर्जितं श्रुत्वा जलदस्य च दर्शने। आरभ्य चतुरो मासान् सम्यग्वर्षति वासवः॥ सप्तम्यां स्वातियोगे यदि भवति नभो दृष्टचन्द्रार्कतारं विज्ञेया प्रावृडेषा बहुजलविपुला सर्वशस्याकुला। घर्मग्रे सलिलराशिमाश्रित्य चन्द्रो लग्नं याती भवति यदि वा केन्द्रगः शुक्लपक्षे। सौम्यैर्दृष्टः प्रचुरमुदकं पापदृष्टो-ऽल्पमम्भः प्रावृट्काले सृजति हिमदः चन्द्रवत् भार्गवोऽपि। प्रश्नात् सद्यो वृष्टिज्ञानम्। "यद्येकराशौ वसतः सितेन्दुजौ पयोऽतिपूर्णां कुरुते वसुन्धराम्। तयोश्च मध्ये यदि पद्म-बान्धवो न संशयं शोषमुपैति मेदिनी। विनोपघातेन पिपी-लिकानामण्डोपसंक्रान्तिरहिव्यवायः। द्रुमादिरोहश्च भुजङ्ग-मानां वृष्टिनिदानानि गवां प्लुतानि। रथ्यायां शिशवः सेतून् रचन् भेकांश्च कुर्वते पवनश्च यदा शीतो वात्यायाश्च विव-र्त्तनम्। गवां निरीक्षणं व्योम्नि तदाशेव प्रवर्षति"॥ भौम-पराक्रमे। "तरुशिखरेषु गताः सकलासा गगनतलस्थिरदृष्टि-निपाताः। यदि गवां निरीक्षणमूर्द्धं निपतति वारिपतन-मचिरेण। यदि स्थिता गृहपटलेषु कुक्कुरा रुवन्ति वा यदि वितत दिवोन्मुखाः दिवातस्रं सुदित पिनाकिदिङ्मुखा तथा

समा भवति जलौघसम्भृता निदाघवातातप उष्णशीतले रटन्ति मण्डूकशिवाद्विचातका मयूरकण्ठद्युति सूर्य्यमण्डले दिनत्रय वा विपतन्ति भूतले"॥ बृहस्पति। "कुसीद कृषिवाणिज्य प्रकुर्वीता स्वय कृतम्। आपत्काले स्वयकुर्वन्नेनसा लिप्यते द्विज॥ राज्ञे च दत्त्वा षड्भाग देवतानाञ्च विंशकम्। त्रिंशद्भागञ्च विप्राणा कृषि दत्त्वा न दोषभाक"॥ तथा "मूषित घातित यत्र सौमायाञ्च समन्तत। अकृतोऽपि भवेत् भाची ग्रामस्तत्र न सशय"॥ हारीत। "अष्टागव धर्म्महल षडगव जीवितार्थिनाम्। चतुर्गव नृशसाना द्विगव ब्रह्म घातिनामिति विष्णुधर्म्मोत्तरे पाठ। "अह्न पूर्वे द्वियाम वा धर्य्याणा वाहन स्मृतम्। वियामेऽन्यभागे च भागे चान्ते यथासुखम्"॥ उशना। "गोभि प्रणाशित धान्य यो नर प्रतियाचते। पितरस्तस्य नाश्नन्ति नाश्नन्ति च दिवौकस"॥ ज्योतिषे। 'इग्रपुरोरव मूल्य पचादौ लघयेद्धध। उक्तमूले सम विद्यात्स्वैरे धान्यमध क्रय॥ हस्ताश्वतभिषा पूर्वादि त्रयरोहिण्य। उत्तरादित्रयकृत्तिकामूलारेवत्य इत्येताश्च चरात् सूचिता॥ रवौ शनौ कुजे वारे पौषे दर्शो भवेद् यदि। तदा धान्यस्य मूल स्याद्देकद्वित्रिगुण क्रमात्॥ दर्शे पौषस्य रात्रौ चेत् व्येहामूलाजलानि च। क्रमान्मूल्यविवृद्धि स्यात् धान्याना वत्सरे तथा॥ सक्रान्ति ऋक्ष तिथिवारयुक्त द्व्याचार रामहृत भवेत्तु। एके समर्घं समता द्वितीये शून्ये महार्घ मुनयो वदन्ति॥ यमाहिशक्राग्निहुताशपूर्वा नेष्टा क्रये विक्रयण प्रशस्ता पौष्णाश्विचित्राशतविष्णुवाता क्रये हिता विक्रयणे निषिद्धा"॥ विष्णुधर्म्मोत्तरे "।यमाणि यानि स्थिराणि चराणि च मृदूनि च। वाणिज्ये तानि शस्यन्ते तिथि रिक्ता विवर्जयेत्॥ प्रतिपद्दादशीषष्ठीनवमाधि

धुवाणि च । कुयीदे वर्जनीयानि दिने सूर्यसुतस्य च" ॥ अथ-विक्रयनक्षत्राणि । "दर्शाष्टमीभूततिथिप्रभेशपूर्वोत्तराश्लेषयाम्यचित्राः । क्रूराहविष्टिव्यतिपातयोगा नेष्टा गवां विक्रयणाशनादौ ॥ चाजं यमदस्रमहिद्वयश्च शक्रद्वयं वायुयुगं महेशः । कार्य्यो न चैतेषु धनप्रयोगो मृदो गणे गाधस्रव्यं न देयम्" ॥ धनप्रयोगनिषेधः ।

अथाद्भुतम् । अद्भुतसागरे आथर्वणाद्भुतवचनं प्रकृतिविरुद्धमद्भुतवचनम् । प्रकृतिविरुद्धमद्भुतमापदः प्राक् प्रबोधाय देवाः सृजन्तीति । तेनापज्ज्ञानाय भूम्यादीनां पूर्वं स्वभावप्रच्यवो देवकर्तृकोऽद्भुत इति । एवञ्च बुधोदयपर्वणि ग्रहादीनां गणितागणितत्वेन प्रकृतानामपि यदुत्पातत्वं तद्धात्तं तत्कारणञ्च गर्गसंहितावार्हस्पत्ययोः । "अतिमोमादसत्याद्दा नास्तिक्यादाप्यधर्मतः । नरापचाराविप्रतसुपसर्गः प्रवर्त्तते ॥ ततोऽपचाराविप्रतमपवर्जन्ति देवताः । ताः सृजन्त्यद्भुतांस्तांस्तु दिव्यनाभसभूमिजान् । त एव त्रिविधा लोके उत्पाता देवनिर्मिताः । विचरन्ति विनाशाय रूपैः सम्बोधयन्ति च" ॥ तांश्च परं न दर्शयेदित्याह विष्णुः । "नोत्पातं दर्शयेदिति" । तत्र वेलामण्डलमण्डलनिरूपणम् । यथा दीपिकायाम् । "प्राग्द्विस्त्रिचतुर्थयामेषु द्युनिशोरद्भुतेषु सर्वेषु चनिलाग्निशक्रवरुणा मण्डलपतयः शुभाशुभायेव । अर्य्यमादिचतुष्कचन्द्रतुरगादित्वेषु वायुर्भवेत् दैवेज्याजविशाखयाम्ययुगले पित्र्यद्वये चानलः । विश्वादित्रयधातृमैत्रयुगलेष्विन्द्रो भवेन्मण्डलः सर्पोपान्त्यस्तृगन्त्यमूलयुगले शानेश्वपामीश्वरः । पवनदहनौ नेष्टौ योगस्तयोरतिदुष्करः । सुरपवरुणौ प्रशस्तौ योगस्तयोरतिशोभनः सवरुणमरुग्निय: शक्रस्तथाग्निसमायुतः । फलविरहितः ऐन्द्रो वायुस्तथाग्नियुतोऽशुभः । यन्मण्डलेऽद्भुतं

जात शान्तिस्तद्दैवताश्रया तथा शान्तिद्वयं कार्य्यं मण्डल इयजाद्भुत" ॥ विष्णुधर्म्मोत्तरे। "ग्रहर्च्चवैकृत दिव्यमान्तरीच निबोध मे। उल्कापातो दिशा दाह परिवेशस्तथैव च ॥ गन्धर्व्वनगरञ्चैव हृष्टिश्च विकृता तथा। एवमादीनि लोके ऽस्मिन् नाभसानि विनिर्दिशेत्। चरस्थिरभव भौम भूकम्प मपि भूमिजम्। जलाशयानां वैकृत्य भौम तदपि कीर्त्तितम्। भौम चाल्पफल ज्ञेयं चिरेण परिपच्यते। नाभम मध्यफलद मध्यकालफलप्रदम्। दिव्य तीव्रफल ज्ञेय शीघ्रकारि तथैव च। शीतोष्णताविपर्य्यासो ऋतूना विपुल भयम्। पुष्पे फले च विकृत राज्ञो मृत्यु तथा दिशेत्। अकालप्रसवा नार्य्य कालातीता प्रजास्तथा। विकृता प्रसवाश्चैव युग्मप्रसवन तथा। हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा चय। पशव पक्षिणश्चैव तथैव च सरीसृपा। विनाश तस्य देशस्य कुलस्य च विनिर्द्दिशेत्। प्रदोषे कुक्कुटारावो हैमन्ते चापि कोकिला। अर्कोदयेऽर्काभिमुख श्वारावो नृभय दिशेत्। उलूको वसति यत्र निपतेद्वा तथा गृहे। ज्ञेया गृहपतेर्मृत्युर्धननाशस्तथैव च। गृध्र कङ्क कपोतश्च उलूक श्येन एव च। चिल्लश्च चर्म्मचिल्लश्च भास पाण्डर एव च। गृहे यस्य पतन्त्येत गेह तस्य विपद्यते। पञ्चाभ्यासात्तथा वर्षान्मृत्यु स्याद् गृहमधिन। पत्नी पुत्रस्य वा मृत्युर्द्रव्यञ्चापि विनश्यति। ब्राह्मणाय गृह दत्त्वा दत्त्वा तन्मूल्यमेव वा। गृह्णीयाद् यदि रोचेत शान्ति ञ्चैमा प्रयोजयेत्। मासास्थीनि समादाय श्मशानाद् गृध्र-वायसा। श्वाश्शृगालोऽथवा मध्ये पुरस्य प्रविशन्ति चेत्। विकिरन्ति गृहादौ च श्मशान सा मही भवेत्। चौरश्च हन्यते लोक परचक्रसमागम। संग्रामश्च महाघोरो दुर्भिक्ष मरकस्तथा। अद्भुतानि प्रसूयन्ते तत्र देशस्य विद्रव। अकाले

फलपुष्पाणि देशविद्रवकारणम्”। मत्स्यपुराणे। “अतिवृष्टि-
रनावृष्टिर्दुर्भिक्षादिभयं मतम्। अनृतौ तु दिनादूर्द्ध्वं वृष्टि-
र्ज्ञेया भयाय च। निरभ्रे चाथ रात्रौ वा श्वेतं याम्योत्तरेण तु।
इन्द्रायुधं ततो दृष्ट्वा उल्कापातं तथैव च। दिग्दाहपरिवेशौ
च गन्धर्वनगरं तथा। परचक्रभयं विद्याद्देशोपद्रवमेव च”।
भासो वनकुक्कुटः। कंसनिधनसूचने हरिवंशः। “वक्रमङ्गा-
रकश्चक्रे चित्रायां घोरदर्शनः। अमात्यपर्वणि मही गिरीणां
शिखराणि च”॥ वाय्वोत्पाते स एव। “दक्षिणां दिशमा-
स्थाय धूमकेतुः स्थितो भवेत्। वक्रमङ्गारकश्चक्रे कृत्तिकासु
भयङ्करः”॥ कृत्यचिन्तामणौ। “त्यक्ता शौचविवेकतत्त्व वसुधा
लोकाः क्षुधापीडिताः विप्रा वेदहतास्तथाप्रचलिता वह्नाग्निनो
दुःखिताः। चौरो मन्दफला नृपाश्च विकलाः सपापघोरा
मही प्रेताघातदुरन्तपीडिततरा देवेज्यराह्वोर्युतौ। रवे
र्मासोद्योगो मासाश्विवशादिभिर्मरकः। धान्यहिरण्यत्वक्-
फलकुसुमाद्ये वर्षिते भयं विद्यात्। अङ्गारपांशुवर्षे विनाश-
मुपयाति तन्नगरम्। उपलं विना जलधरैर्विकृता वा यदा
प्राणिनो दृष्ट्वा। छिद्रं वाप्यतिवृष्टिं शस्यानामीति संजन-
नम्”। बुधकौशिकसंवादे। “वल्ल्याः प्रपाते च फलं शरटस्य
प्ररोहणे। शीर्षे राजश्रियोऽवाप्तिर्भाले चैश्वर्य्यमेव च। कर्ण-
योर्भूषणावाप्तिर्नेत्रयोर्बन्धुदर्शनम्। नासिकायाञ्च सौगन्ध्यं
वक्त्रे मिष्टान्नभोजनम्। कण्ठे चैव श्रियोऽवाप्तिर्भुजयोर्विभवो
भवेत्। धनलाभो बाहुमूले करयोर्धनसञ्चयः। स्तनमूले च
सौभाग्यं हृदि सौख्यविवर्द्धनम्। पृष्ठे नित्यं महीलाभः पार्श्व-
योर्बन्धुदर्शनम्। कटिद्वये वस्त्रलाभो गुह्ये मृत्युसमागमः।
जङ्घे चार्थक्षयो नित्यं गुदे रोगभयं भवेत्। ऊर्वोस्तु वाह-
नावाप्तिर्जानुजङ्घेऽर्थसञ्चयः। वामदक्षिणयोः पादोर्भ्रमणं

नियतं भवेत्। वल्म्याः प्ररोहणे चैव पतने शरटस्य च। व्यत्यासाच्च फलञ्चैव तद्वदेवं प्रजायते। वल्म्याः प्ररोहणं रात्रौ शरटस्य प्रपातनम्। निधनार्थाय भवति व्याधिपीडा विपर्य्ययौ। पतनानन्तरञ्चैवारोहणं यदि जायते। पतने फलमुत्सृष्ट रोहणेऽन्यत् फलं भवेत्। आरोहणञ्चोर्द्ध्ववक्त्रं अधोवक्त्रे च पातनम्। भवेदिष्टफलं तस्य तत्फलं जायते ध्रुवम्। स्पृष्टमात्रे च यः सद्यः सचैलं जलमाविशेत्। पञ्चगव्यप्राशनञ्च कुर्य्यादर्कावलोकनम्। वल्लीरूपं सुवर्णस्य रक्तवस्त्रेण वेष्टयेत्। पूजयेद्गन्धपुष्पाद्यैस्तदये पूर्णकुम्भके। पञ्चगव्यं पञ्चरत्नं पञ्चाम्रतं स पल्लवम्। पञ्चत्वक्कषायञ्च निक्षिप्याभ्यर्चयेत्ततः। पूजयेद्गन्धपुष्पाद्यैर्लोकपालांस्तथा क्रमात्। मृत्युञ्जयेन मन्त्रेण समिद्भिः खदिरैः शुभैः। तिलैर्व्रीहिभिर्होममष्टोत्तरसहस्रकम्"। वल्ली गृहगोधिका। मृत्युञ्जयमन्त्रस्त्र्यम्बकमन्त्र इति विद्याकरः। गर्गसंहितावार्हस्पत्ययोः। "ये तेषु शान्तिं कुर्वन्ति न ते यान्ति पराभवम्"। ये तु न प्रतिकुर्वन्ति क्रिययाऽश्रद्धयान्विताः। दाम्भिक्याद्वा विमोहाद्वा विनश्यन्त्येव तेऽचिरात्"। अत्र निमित्तनियमवतोऽधिकारः अन्यथा दोष इत्याह मत्स्यपुराणम्। "भिन्नमण्डलवेलायां ये भवन्त्यद्भुताः क्वचित्। तत्र शान्तिद्वयं कार्य्यं निमित्ते सति नान्यथा। निर्निमित्तकृता शान्तिर्निमित्तमुपपादयेत्"। एतच्च तत्तद्विशेषविहितशान्तिविषयम्। अन्यथा वेलामण्डलसन्देहे शान्तिर्न स्यात्। अतएवोक्तं योगियाज्ञवल्क्येन। "यत्र यत्र च सङ्कीर्णमात्मानं मन्यते द्विजः। तत्र तत्र तिलैर्होमो गायत्र्या समुदाहृतः। गायत्र्या प्रयतः शुद्धः सर्वपापैः प्रमुच्यते। शान्तिकामस्तु जुहुयात् गायत्रीमक्षतैः शुचिः। हन्तुकामश्च नृपतिर्दहनेन जुहुयात् शुचिः। सावित्र्या शान्तिहो-

मांच कुर्य्यात् पर्वसु नित्यशः। प्रणवव्याहृतिभ्याश्च स्वाहान्ता-होमकर्मणि। प्रतिलोमा प्रयोक्तव्या फट्कारान्ताभिचारिके"। विश्वामित्रेणापि निमित्तमन्देहे कृच्छ्रादीन्युक्तानि यथा। "कृच्छ्रचान्द्रायणादीनि सर्वाभ्युदयकारणम्। प्रकाशे च रहस्ये च संशयेऽनुक्तकेऽस्फुटे"। मार्कण्डेयपुराणम्। "दिग्-देशजनसामान्यं नृपसामान्यमात्मनि। नक्षत्रग्रहसामान्यं नरो भुङ्क्ते शुभाशुभम्। परस्पराभिरक्षाभिर्ग्रहदोषेषु जायते"। तथा। "तस्माच्छान्तिपरः प्राज्ञो लोकवादरतस्तथा। लोकवादांश्च शास्त्रीय ग्रहपीडासु कारयेत्। भूदी-क्षानुयज्ञांश्च अस्तचैत्याभिवन्दनम्। कुर्य्यात् होमं तथा दानं ग्राहं क्रोधविवर्द्धनम्। अद्रोहं सर्वभूतेषु मैत्रीं कुर्य्याच्च पण्डितः। वर्जयेदुक्तीं वाचमतिवादांस्तथैव च। ग्रहपूजाञ्च कुर्वीत सर्वपीडासु मानवः। एवं शाम्यन्त्यशेषाणि घोराणि द्विज-सत्तम। प्रयतानां मनुष्याणां ग्रहर्क्षोत्थान्यनेकशः"। लोक-वादाश्च तत्रैवोक्ता यथा। "आकाशाद्देवतानाञ्च दैत्यादीनाञ्च सौहृदात्। पृथिव्यां प्रतिलोके च लोकवादा इति स्मृताः"। ते च सर्वभूतडाकिन्याद्यभिभवशान्त्यर्थं लौकिकौषधमन्त्रा-दयः विपहरीमङ्गलचण्डिकाशीतादयः चैत्यवृक्षादौ चैत्र-ग्रामदेवतापूजा च। तथा चापस्तम्बः। "स्त्रीभ्योऽवर-वर्णेभ्यो धर्मशास्त्रं प्रतीयादित्येक इति"। धर्मशेषान् श्रुतिस्मृतिसदाचारेष्वप्रसिद्धानिति नारायणोपाध्यायः। भूदो-ह्यश्च पात्रं विना भूमौ गोस्तनं निष्पीड्य दुग्धोत्सर्गः। चैत्यः पूज्यत्वेन ख्यातो वृक्षः। तथा च बाणोत्पाते हरिवंशः। "अनेकशाखश्चैत्यश्च निपपात महीतले। अर्चितः सर्वकन्या-भिर्दानवानां महात्मनाम्"॥ उपतीमकल्याणीम्। अति-वादश्च पूज्यमतिक्रम्य भाषणम्। मत्स्यपुराणम्। "काकस्य-

करवश्राव: प्रभाते दुःखदायकः। काको मैथुनकासक्तः श्वेतो वा यदि दृश्यते॥ उलूको वसते यत्र निपतेद्वा तथा गृहे। ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च" ॥ वराहसंहितायाम्। "क्रीड़ातुरङ्गो रतिमांसलुब्धो भीतो रुजार्त्तः पतितो विहङ्गः। भार्यो गृहस्यस्य विनाशहेतुर्दोष: समुत्थाप्यत आहुरार्य्याः॥ गृहे पक्षिविकारेषु कुर्य्याद्वामरतर्पणम्। देवाः कपोता इति वा जप्यं सप्तभिर्द्विजैः॥ गावश्च देया विविधा द्विजानां सकाञ्चना वस्त्रयुगोत्तरीयाः। एवंकृते पापमुपैति शान्तिं मृगैर्द्विजैर्वापि निवेदितं यत्" ॥ द्विजैः पक्षिभिः अपि नाऽन्यैरपि। भुजबलभीमे। "एकोदयस्तयोर्भावः समाख्या नवं दन्तिनः। सिंहप्रसूतिकाश्चैव कथिताः स्वामिघातकाः" ॥ मत्स्यपुराणे। "अङ्गे दक्षिणभागे तु शस्तं विस्फुरणं भवेत्। अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य च॥ लाञ्छनं पिटकं चैव ज्ञेयं विस्फुरितं तथा। विपर्ययेण विहितं सर्वं स्त्रीणां फलं तथा॥ अनिष्टचिह्नोपगमे द्विजानां कार्य्यं सुवर्णेन च तर्पणं स्यात्" सिंहप्रसूतिका गावः। शङ्खः। "दुःस्वप्नानिष्टदर्शनादौ घृतं हिरण्यञ्च दद्यादिति"। मात्स्ये। "नमस्ते सर्वलोकेश नमस्ते भृगुनन्दन। कवे सर्वार्थसिद्ध्यर्थं गृहाणार्घ्यं नमोऽस्तु ते॥ एवं शुक्रोदये कुर्वन् यात्रादिषु च कारयेत्। सर्वान् कामानवाप्नोति विष्णुलोके महीयते॥ नमस्तेऽङ्गिरसां नाथ वाक्पतेऽथ बृहस्पते। क्रूरग्रहैः पीड़ितानाममृताय नमो नमः॥ संक्रान्तावपि कौन्तेय यात्रास्भ्युदयेषु च। कुर्वन् बृहस्पतेः पूजां सर्वान् कामान् समश्नुते" ॥ वैष्णवामृते व्यासः। "ग्रहयज्ञैः शान्तिकैश्च किं क्लिश्यन्ति नरा द्विज। महाशान्तिकरः श्रीमांस्तुलस्या पूजितो हरिः॥ उत्पातान् दारुणान् पुंसां दुर्निमित्ताननेकशः। तुलस्या पूजितो भक्त्या

महाशान्तिकरो हरिः" ॥ अत्र ब्रह्मपुराणीयो मन्त्रः । "नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहेति" । छन्दोगपरिशिष्टम् । "अथातो रजस्वलाभिगमने गोऽश्वभार्य्यासु गमने यमजजनने विजातीयजनने वा काककङ्कगृध्रबकश्येनभासभिल्लकपोतानां गृहप्रवेशे महिषस्योपरि विश्रामणे एषामेव क्रियमाणे गृह-द्वारारोहणे चाद्भुतेषु कल्पदृष्टेन विधिनाऽग्निमुपसमाधाय प्रायश्चित्ताज्याहुतीर्जुहोति अद्भुताय अग्नये स्वाहा सोमाय विष्णवे रुद्राय वायवे सूर्य्याय मृत्यवे विश्वेभ्यो देवेभ्यः स्वाहेति स्थालीपाकहुतान्यदिति" ॥ कपोतं विशेषयति शौनकः । "रक्तपादः कपोताख्यो धरणोक्ताः शुकच्छविः । स चेच्छालां विशेच्छाला समीपस्य व्रजेयदि ॥ अन्येषु गृहमध्ये वा वल्मीकस्योद्गमादिषु" ॥ कल्पदृष्टेन विधिना गृह्योक्तेन प्रायश्चित्ताज्याहुतीः अद्भुतदोषप्रशमनार्थाः सप्ताज्याहुतीः । अद्भुतायाग्नये स्वाहा इत्यादिमन्त्रैः तत्र स्थालीपाकेतिकर्त्तव्यतायां पायसचरुभिरेतेभ्यो देवेभ्यो जुहुयात् । छन्दोगपरिशिष्टम् । "पश्चात् घृतपायसेन ब्राह्मणान् भोजयित्वा गोवरं दत्त्वा शान्तिर्भवतीति गोवरं गोश्रेष्ठं दक्षिणां तां गां कृत्वा दोषशान्तिर्भवतीति" । तथाचोक्तम् । "गौर्विशिष्टतमा लोके देवेष्वपि निगद्यते । न ततोऽन्यद्वरं यस्मात्तस्माद्गौर्वरमुच्यते" ॥ छन्दोगपरिशिष्टम् । "यस्त्वेषामन्यतममापन्नः प्रायश्चित्तं न कुर्य्यात् तस्य गृहपतेर्मरणं सर्व्वस्वनाशो वा भवति तस्मात् प्रायश्चित्तं कर्त्तव्यं कर्म्मापवर्गे वामदेव्यगानं शान्तिः शान्तिरिति" अपवर्गे समाप्तौ । वामदेव्यगानं शान्तिः कार्य्येति आवृत्तिः प्रकरणसमाप्त्यर्था । वार्हस्पत्ये । "शमयन्त्या सप्ताहात् कन्यादिकृतं निमित्तमाश्वेव । अतिवर्षणोपवासव्रतदीक्षाजप्यहवनानि" ॥ वराहः । "ये च न दोषं जनयन्त्युत्पातांस्तान्ऋतुस्वभावकृतान्

ऋषिपुत्रकृतैः शोभैर्विद्यादेभिः समासोक्तैः"। तथा च मत्स्य-पुराणम्। "वज्राशनिमहीकम्पसन्ध्यानिर्घातनिस्वनाः। परिवेशरजोधूमरक्ताकांस्तमयोदयाः। द्रुमेभ्योऽथ रसस्नेहमधुपुष्पफलोद्गमाः। गोपचिमदवृद्धिश्च शिवाय मधुमाधवे। तारोल्कापातकलुषं कपिलार्केन्दुमण्डलम्। अनग्निज्वलनं स्फोटं धूमरेणुमिवाकुलम्। रक्तपद्मारुणा सन्ध्या नभःक्षुब्धार्णवोपमम्। सरितां चाम्बुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत्। शक्रायुधपरीवेशौ विद्युच्छुष्कविरोहणम्। कम्पोद्वर्त्तनवैकृत्यं रसनं दरणं क्षितेः। नद्युदपानसरसां वृद्ध्युद्धा भवनप्लवाः। पतनश्चाद्रिगेहानां वर्षासु न भयावहम्"॥ हरिवंशे वर्षावर्णनायाम्। "क्वचित् कन्दरहासाद्यं शिलीन्ध्राभरणं क्वचित्" इति दर्शनात् वर्षासु शिलीन्ध्रोद्गमो न भयावहः। "दिव्यस्त्रीभूतगन्धर्वं विमानाद्भुतदर्शनम्। ग्रहनक्षत्रताराणां दर्शनञ्च दिवाम्बरे॥ गीतवादित्रनिर्घोषो वनपर्वतसानुषु। शस्यवृद्धिरसोत्पत्तिरपापाः शरदि स्मृताः॥ शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम्। रक्षोयक्षादिसत्त्वानां दर्शनं वागमानुषी॥ दिशो धूमान्धकाराश्च सनभो वनपर्वताः। उच्चैः सूर्योदयास्तञ्च हेमन्ते शोभना मताः॥ हिमपातानिलोत्पातविरूपाद्भुतदर्शनम्। दृष्टाञ्जनाभमाकाशं तारोल्कापातपिञ्जरम्॥ चित्रगर्भोद्भवाः स्त्रीषु गोऽजाश्वमृगपक्षिणाम्। पत्राङ्कुरलतानाञ्च विकाराः शिशिरे शुभाः॥ ऋतुस्वभावजा ह्येते दृष्टाः स्वर्त्तौ शुभावहाः। ऋतावन्यत्र चोत्पाता दृष्टास्ते भृशदारुणाः॥ उन्मत्तानाञ्च या गाथाः शिशूनां चेष्टितञ्च यत्। स्त्रियो यच्च प्रभाषन्ते तत्र नास्ति व्यतिक्रमः॥ पूर्वञ्चरति देवेष पश्चाद्गच्छति मानुषान्। नादेषिता वाग्वदति सत्या ह्येषा सरस्वती"॥ बृहस्पतिः। "ज्योतिर्ज्ञानं तथोत्पात-

मविदित्वा तु ये नृपाम्। न्यायवन्त्यर्थलोभेन विनेयास्तेऽपि यत्नतः" ॥ विनेया दण्डनीयाः।

अथ यात्रा। मत्स्यपुराणे। "ऋक्षेषु षट्सु शुद्धेषु ग्रहेष्वनुग्रहेषु च। प्रश्नकाले शुभे जाते परान् यायान्नराधिपः" ॥ ऋक्षेषु षट्सु नाडीनक्षत्रेषु। दुर्गभवतात्तु "अर्थो ह्यनर्थतां याति दुर्भगानां यथा विभो। विषमे तत्ससुद्र तमस्याखाद्यतकाङ्क्षया"॥ अस्मात् समुद्रमथनात्। भागुरिः। "दिगीशं हृदये ध्यात्वा गन्तव्याशामुखः स्थितः। अन्तःसमीरणे देहप्रवेशे समुपस्थिते। स्वस्तीति दक्षिणं पादमासनादवतारयेत्"। राजमार्त्तण्डे। "प्रतिदिगीशं हृदये निधाय यथेन्द्रमैन्द्र्यामपराश्च तद्वत्। सुगन्धमाल्याम्बरभृन्नरेन्द्रो विसर्जयेद्दक्षिणपादमादौ। स्नातः सिताम्बरधरः सुमनाः सुवेशः संपूजितोऽमरगुरुद्विजगोदिगीशः। कृत्वा प्रदक्षिणमिव शिखिनं कृताग्रोगंन्क्षेवरः शकुनसूचितकार्य्यसिद्धिः" विष्णुपुराणम्। "माङ्गल्यपुष्परत्नाद्यैः पूज्यानभिवाद्य च। न निष्क्रमेत् गृहात् प्राज्ञः सदाचारपरो नरः ॥ गृहाद् गृहान्तरं गर्ग. सीम्नः सीमान्तरं भृगुः। भरद्वाजो वशिष्ठो नगराद्बहिः" ॥ यात्रानन्तरं वराहः। "संत्यजेद्दीनमागारं तथा शयनमन्दिरम्। दूरस्थं जलमध्यस्थं यथान्नं व्याधिपीडितम् ॥ गच्छन्तमपि यानस्थं ब्राह्मणं नाभिवादयेत्" ॥ हस्तयात्रायां राजमार्त्तण्डे "प्राच्यामहानि मुनयः प्रवदन्ति सप्त याम्यामतीव शुभदानि दिनानि पञ्च। वारुणेश पश्चिमदिशि चितिनायकानां प्रस्थानकेषु दिवसत्रयमुत्तरस्याम् ॥ एतद्वायुत्रमित्याहुर्होराशास्त्रविदो बुधाः। यात्रां चिपञ्चसप्ताश्च पुनर्भद्रेण योजयेत् ॥ वाञ्छितार्थफलावाप्तौ यात्रापरिसमाप्यते। जन्मर्क्षे चाष्टमे चन्द्रे वारे भौमशनैश्चरे ॥ प्रस्थितेऽपि न गन्तव्यमत्यन्तगर्हिते दिने। जन्मभे जन्ममासे वा योग-

च्छेदष्टमे विधौ॥ आयुःक्षयमवाप्नोति व्याधिञ्च वधबन्धने"॥ विष्णुपुराणम्। "वर्षातपादिके छत्री दण्डी रात्र्यटवीषु च। शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत्॥ नोर्द्ध्वं न तिर्य्यग् दूरं वा निरीक्षन् पर्य्यटेत् बुधः। युगमात्रं महीपृष्ठं नरो गच्छेद्विलोकयन्॥ चतुष्पथान्नमस्कुर्य्यात् चैत्य वृक्ष तथैव च। प्रश्ने मनोरमाभूमाङ्गल्यद्रव्यदर्शनश्रवणे॥ यदि चादरेण पृच्छति दैवज्ञं निर्दिशेद्विजयम्"॥ यात्राप्रश्नविधिः। "स्तन-चरणतलौष्ठाङ्गुष्ठहस्तौ समाङ्गं श्रवणवदन-नासा गुह्यरन्ध्राणि भूपः। स्पृशति यदि करग्रेणैकवचनं वा द्युतिगतिशुभ-शब्दान् व्याहरन् शास्ति यन्त्रन्"॥ प्रश्ने स्वरादिभिर्जयज्ञानम्। व्यासः। "चिरप्रवासयात्रायां दृष्टे वर्णस्य वेधने। चूडाकृतौ प्रतिष्ठायां भानुशुद्धिर्विधीयते॥ चारोग्यस्तवेण धनं चपीन कार्य्यस्य सिद्धिं तिथिनाशयाय। राज्यदमे चाध्वनिसिद्धिमाहुः प्रायः शुभानि चपदाकरेण"॥ सम्वत्सरप्रदीपे। "सिंहे धनुषि मीने च स्थिते सप्ततुरङ्गमे। यात्रोद्वाहव्रतारम्भचौर-कर्माणि वर्जयेत्"॥ एष यात्राप्रतिषेधो राजेतरपरः। "मार्ग-शीर्षे शुभे मासि यायाद्यात्रां महीपतिः। फाल्गुनं वाथ चैत्रं वा मास प्रति यथाबलम्"॥ इति मनुवचनात्। "श्रावणे भाद्रमासे युवतिमृगगते चार्थलाभः प्रदिष्टो मासे पौषे न यात्रा भवति नरपतेरर्थसिद्धिप्रदायी" इति राजमार्त्तण्डाच्च। "शुक्लाद्या च्चाक्कुभे चन्द्रे कुजार्कभृगुराशिगे। तत्पक्षे शुभदा यात्रा कृष्णपक्षे ततोऽन्यथा"॥ यात्रायां पक्षशुद्धिः। "षष्ठ्यष्टमी द्वादशीषु न गच्छेत् त्रिदिनस्पृशि। पूर्णिमाप्रतिपद्यो रिक्ताव-मदिनेषु च॥ तथा यामद्वितीयायां यात्रायां मरणं भवेत्। अजातचन्द्रा प्रतिपत्तिथिर्या सा सर्वथा सिद्धिकरी न पुंसाम्॥ कलौ न चन्द्रा प्रतिपत्तिथिर्या सा सर्वदा सिद्धिकरी नियुक्ता।

प्रतिपत्सु प्रयातानां सिद्धिरेव न संशयः। द्वितीयायां शुभः पन्थास्तृतीयायां जयो भवेत्॥ वधबन्धनसंक्लेशश्चतुर्थ्यां नात्र संशयः। पञ्चम्यामीप्सितार्थः स्यात् षष्ठ्यां व्याधियुतो भवेत्॥ सप्तम्यामर्थलाभः स्यादष्टम्यामङ्गपीड़नम्। नवम्यां मृत्युसंयोगान्न गन्तव्यं कदाचन॥ दशम्यां भूमिलाभः स्यादेकादश्यामरोगिता। द्वादश्याञ्च न गन्तव्यं सर्वसिद्धा त्रयोदशी॥ चतुर्दश्यां पञ्चदश्यां गमनञ्च निषेधयेत्। संत्यजेद्दिवसे यात्रां सूर्य्यावार्केन्दुवक्रिणाम्॥ अष्टवर्गदशापाकेष्वनिष्टफलदस्य च। सूर्य्यदिनेऽध्वनि नायसम्पत् शशिनि चयोऽर्थदाराश्च। ज्वलनासृक्पित्तरुजः कौजे बुधे सुहृत्प्राप्तिः। जैवे धनजयलब्धिः शौक्रे स्त्रीवस्त्रगन्धधनलाभान्॥ दैन्यवधबन्धरोगान् प्राप्नोति दिनेऽर्कपुत्रस्य। उपचयग्रहदिने सिद्धिः क्रूरेऽपि यायिनां भवति॥ सौम्येऽप्यनुपचयस्थे न भवति यात्रा शुभा यातुः। शुक्रादित्यदिने न वारुणदिशं न ज्ञे कुजे चोत्तरां मन्देन्द्वोश्च दिने न शक्रककुभं याम्यां गुरौ न व्रजेत्॥ शूलानीति विलङ्घ्य यान्ति मनुजा ये सौख्यवित्ताशया भ्रष्टाशाः पुनरापतन्ति यदि ते शक्रेण तुल्या अपि। दिगीशांशे शुभा यात्रा पृष्ठांशे मरणं ध्रुवम्"॥ गर्गोऽपि। "दिगीशवारे गमनं प्रशस्तं विहाय सौम्यं यदि जीविताशया॥ न वारदोषाः प्रभवन्ति रात्रौ विशेषतोऽर्कावनिभूसुनीनाम्। गुणयति तिथा दृष्टेऽनिष्टे दिवागमनं हितम्। निशि च सगुणैः शस्तं यानं तिथिगुणवर्जिते"॥ अतिथिगुणवर्जिते। "अतिथि कथितान् दोषान् प्राप्नोत्यतः प्रतिलोमगः॥ गुणमपि तयोर्यस्मात् सम्यग्जगाद भृगुमुनिः। याम्यायने निशायात्रा शुभा स्यादुत्तरे दिवा॥ चन्द्रसूर्य्यौ मृगादिस्थौ पूर्वां याम्यां तथोत्तराम्। दक्षिणां पश्चिमामाशां कर्क्यादौ तौ स्थितौ यदा॥ अन्यथा वधबन्धा-

दिक्शूलमाप्नोत्यसंशयम्"॥ योगिनी तु। "प्रतिपन्नवमी पूर्वे रामारुद्राश्च पावके। शरचयोदशी याम्ये वेदामासाश्च नैर्ऋते॥ षष्ठी चतुर्दशी पश्चात् वायव्यां मुनिपूर्णिमे। द्वितीया दशमी यचे ऐशान्यामष्टमी कुहूः॥ योगिनी नवदण्डास्तु शेषा वर्ज्या विशेषतः। दक्षसंमुखयोगिन्यां गमनं नैव कारयेत्। वामे शुभकरी देवी पृष्ठे सर्वार्थसाधनी"॥ राहुभ्रमणचक्रम्। "पश्चादर्के विधौ वह्नौ सौम्यां ज्ञे वायवे कुजे। रक्षो दिशि भृगौ याम्यां गुरावीशे शनौ दिशे॥ राहुर्भ्रमति याम्यादिदश्चगत्या च वामतः। प्रतीच्यां वह्निकोणे तु ततः सौम्यामतो रूपे॥ ततो प्राच्यामतो वायौ तस्माद् याम्यां ततः शिवे। रवावेवमन्यवारेषूह्यमेव क्रमेण हि॥ द्यूते युद्धे विवादे च यात्रायां समुखस्थितम्। राहुं विवर्जयेत् यत्नाद् यदीच्छेत् कर्मणः फलम्"॥ राहुसांमुख्यनिषेधः। "अश्विहस्तगुरुमैत्रदैवतैः पौष्णविष्णुवसुश्रोतरश्मिभिः। यानमेभिरतिसुन्दरं विदुः सर्व एव मुनयस्तु नेतरैः॥ चित्रास्वेतास्वातिविशाखा भरणी शिवेरगकृत्तिकाः। नातिशुभदा प्रयाणे शेषाणि शुभाशुभानि धिष्ण्यानि॥ दग्ध अयपुर सदग्निभमुदेत्यर्को न चेदुत्तरे रोहिण्याश्च विशाखभे च न गमः पूर्वाह्नकाले शुभः। मध्याह्ने न शिवाहिमूलवलभिद्गेष्वह्निशेषेऽश्विनीहस्तापुष्यमृगश्रुतिश्रविशमैत्राख्ये न रात्र्यादितः। रात्रेर्मध्यमस्तु पूर्वमरणी पित्र्येषु शेषे निशी घ्यादिवितयादितिष्वपि जल मध्याह्नरात्र्यन्त्ययोः। पुष्याहस्तमृगाच्युतेषु शुभदाः सर्वेऽपि कालास्तथा सार्वदारिकसंज्ञितानि गुरुभ हस्ताश्विमैत्राणि च। पूर्वाद्याग्निमघानुराधवसुभाद्दोन्यत्र दण्डोऽन्तरे वायुम्योर्न स लक्ष ऐकमनक्षप्राच्योस्तथान्याविदिक्। लग्ने दिग्वदनेऽतिदण्डगमनं प्राच्यादि शूलं विना

तेभ्योऽष्टाजपदं सरोजनिलयः स्यादुत्तराफल्गुनी"। प्रतिदण्ड-गमनं दण्डमुल्लङ्घ्य गमनम्। "दिशोरष्टमभागश्च विदिक्कोणश्च कथ्यते। मेषाद्यास्त्रिभ्रमाज्ज्ञेयाः प्रागादि दिक्षु ताः ग्रहाः। शीर्षोदये समभिवाञ्छितकार्य्यसिद्धिः पृष्ठोदये विफलता चलचित्तता च। यातव्यदिङ्मुखगतस्य सुखेन सिद्धिर्वैलोम्यतो भवति दिक्प्रतिलोमलग्ने। केचिदाहुर्न यायात्तुल्यां प्राच्यान्तु दक्षिणे। अश्विन्यां पश्चिमे पुष्ये नोदीच्यां हस्तभे न तु। गुरुहस्ताश्विमैत्राणि सर्वदिक्षु शुभं युजि। अतो दिग्भेददोषोऽत्र वराहादेरसम्मतः"। नैशानाग्निविशाखपायूर्व्वह्निमघायाम्यैः पराह्णे न संविदाद्यान्तकजं परप्रथमजं पिबरामिति चाखिले। राहुक्रूरयुगस्वसन्निधितयोत्पातप्रदुष्टं ग्रहैर्दैवैर्युभमसहिते निशि तिथावुक्तेऽप्यनिष्टे गमः। "क्रूरग्रहैः संयुतेऽस्तः प्रकोपो वक्रोऽस्तगो राहुणार्केण योगः। केतूल्कानां पीडिते देवतायाः क्रोधी भौमे सोपग्रहग्रासजे च। उपग्रहाख्य ऋक्षेषु वर्जयेद्गमनं नृपः। उपग्रहगतस्त्रीयजन्मर्क्षे न गमेत् क्वचित्"। उपग्रहाश्च सर्वतोभद्रचक्रे प्रागुक्ताः। "पूर्वोक्तजन्मकर्मादि नाडीनक्षत्रदोषवान्। यात्रा मनुवधं याति विग्रहो मनुनामकम्। यात्रायां शोभनास्ताराः सर्वाः कर्मान्यर्थसंयुताः। यात्राभङ्गविधावस्त्यथ भवेत् सोऽर्कात्त्रिकोणे विधौ। भौमाद्यसुप्तादिषु वा बलिन्यथ सुते गन्तव्यदिक्पालतः"। सुते इत्यत्र शुभे इत्यपपाठः। "यात्रादिगीशाद्यदि पञ्चमोऽन्यो ग्रहे ग्रहो वीर्य्ययुतोऽवतिष्ठेत्। यात्रोद्यतस्तत्र न याति यात्रां तयोर्व्वशीयाप्रयति स काष्ठाम्" इत्यनेन विरोधात्। "सर्वं शुभफलं नश्येद् यात्राभङ्गे गतस्य च। व्यसनं प्राप्नोति महदाप्तोपातविनिर्गतोऽथवा मृत्युम्। वैधृतिगमनेऽप्येवं तरहर्षर्य्योऽप्युपदिशन्त्येके"। व्यसनान्याह मनुः। "काम-

जेषु प्रसक्तो हि व्यसनेषु महीपतिः। वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु। मृगयाक्षो दिवास्वप्नः परीवादस्त्रियो मदः। तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः। पैशुन्यं साहसं द्रोह ईर्षासूयार्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टक."। तौर्य्यत्रिकं नृत्यगीतवाद्यानि त्रिणीति दश। पैशुन्यमविज्ञातपरदोषाविष्करणम्। साहसं साधोर्बन्धनादिना निग्रहः। द्रोहो जिघांसा। ईर्षा अन्यगुणासहिष्णुता। असूया परगुणेषु दोषाविष्करणम्। अर्थदूषणम् अर्थानामपहरणं देयानामदानञ्च। भौमपराक्रमे। "न विष्कुम्भो न वा गण्डो न व्यतीपातवैधृतौ। चन्द्रतारा बले प्राप्ते दोषागच्छन्त्यसंमुखाः। गरवणिजविष्टिविवर्जितानि करणानि यातुरिष्टानि। गरमपि कैश्चिद्वदितं वणिजस्तु वणिक्क्रियास्वेव। पूर्वाह्णे तूत्तरां गच्छेत् मध्याह्ने पूर्वतो व्रजेत्। अपराह्णे व्रजेत् याम्यां अर्द्धरात्रे च पश्चिमाम्। भव्यन्द्वारकौ विष्टिः शनैश्चरदिन तथा। व्यतीपातो न दुष्येत यस्यार्को दक्षिणे स्थितः। रामो रामो द्वादशेन्दोरवस्थाः प्रोक्ताः कैश्चित् सूरिभिः प्रोषिताद्याः। यात्रोद्वाहादौषु कार्य्येषु नून सम्मातुल्यं तत्फलं चिन्तनीयम्। प्रवासनष्टाख्य मृताजयाख्याहास्यारतिक्रीडितसुप्तभुक्ताः। ज्वराह्वया कम्पितसुस्थिते द्विषट्कसंख्या हिमगोरवस्थाः"। चन्द्रस्य द्वादशावस्थागणनमाह "यज्ञादिभुक्तोडुघटासमूहाहेदा ४ हताहाग समङ्क ४५। भुक्तात् सयार्कशेषे शशिनः क्रियाद्या भवन्त्यवस्था गतगम्यरूपाः। सदाद्याः शून्यमहरणा एकावस्था भवेत्ततः। स्नानमन्त्रौनान्यगुणान्वितापि प्रीतिं न यात्रा मनसः करोति। समद्युतारूपगुणान्वितापि प्रमष्टयोषा वनितेव पुंसः। मीने कर्किन्यलिनि च हये अप्रकाशस्थपापे वामे वा दिग्द्युनिश-

बलिनां जन्मलग्नाष्टमे वा। वर्गे पापानुपचयकृतां वक्रिणां पृष्ठलग्ने पापान्तःस्थे न शुभमबलं जन्मलग्नानधीने"। वामे विपरीते। "घटमिथुनकुलीराश्चापमीनौ च कन्याः खलु शुभभवनत्वाद्राशयः सप्त सौम्याः। अलिधटमृगसिंहाजास्तु पापाश्रयत्वान्मुनिभिरभिहितास्ते प्रायशः क्रूरभावाः"। अन्यच्च। "लग्ने कार्मुकमेषतौलिमिथुने कार्यं विलग्ने नृणां पश्चास्ये मकरे तथा प्रनिष्टढे तद्वत्फलं वृश्चिके। सिंहे वा यदि गोघटेषु गमनं सर्वार्थसिद्धिप्रदं स्यादाशापतिषु प्रयाति सकलं कन्याझषे मन्मथे"। तथा। "नेष्टं दिशन्ति सकराणि कुलीरलग्ने मेषे घटे धनुषि दीर्घकरी हि यात्रा। युग्माङ्गना झषवृषे भ्रमणर्थलाभो ज्योतिर्विदः सकलसिद्धिमुपैति लक्ष्मीः"। यात्रायां सामान्यलग्नविवेकः "मीने च कुटिलो मार्गो भवति तदीयेऽन्यराशिलग्नेऽपि। मीनानमाप्यलग्ने कार्यं तेषां नवांशे वा"। दिगादि बलिनो यथा। "ऐन्द्रां मानुषराशयस्तु यमवो याम्ये सतौर्य्या बलिनांदलाखं बलयुक् तथैव बलिनः पानीयजयोत्तरे। सर्वे मानुषराशयो दिनबलाराश्रो म वीर्य्यायतुष्पादाः, ग्रैवगणास्तथैव बलिनः सन्ध्याद्वये कीर्त्तिताः। स्वराशिलग्नाष्टमलग्नयोश्च क्षयवृभाच्छमुरदोदये वा। तद्राशिर्वा गमनं विलग्ने तुल्यं नराणां विषभक्षणेन। उपचयकरस्य वर्गः क्रूरस्यापि प्रशस्यते लग्ने। चन्द्रे वाप्युक्तेन तु विपरीतस्य सौम्यस्य। यानं भं जन्मराशेरुपचयमुदयारिविलाभश्च येषिभिर्वं वर्ग्यं स्वजन्मलग्नष्टयोर्यद्गृहे नौनिरगम्। स्थानं सौम्यस्य जन्मन्यभिमतफलदस्यापि यत्र ग्रहस्य याम्यां लग्नाभिजिह्वं शुभफलदग्रहोऽन्दोश्च या काऽऽहोरा स्वाधिपते-र्दिशि राशिः ध्रुव इति यवनैः सदा कथितम्। तत् ध्रुवगो विनिहन्यादरिंश्च महीपतिः प्रयातु सर्वदाः सर्वार्थसाधकः सर्व-

